कर्यनेोपजीविष्याम इति ॥६॥ स विद्यादहमेव सामास्मि मन्येता देवता इति ॥७॥ १ । १३॥

तृतीयेऽनुवाके तृतीय खण्ड ।

न ह दूरे देवतस्स्यात्[1] । यावद्ध वा आत्मना देवानुपास्ते तावदस्मै देवा भवन्ति ॥ १ ॥ अथ य एतदेवं वेदाऽहमेव सामाऽस्मि मन्येतारसर्वा[2] देवता इत्येव हाऽस्मिन्नेतास्सर्वा देवता भवन्ति ॥२॥ तदेतदेवश्रुत्साम । सर्वा ह वै देवताश्शृण्वन्त्येवं-विदम्पुण्याय साधवे । ता एनम्पुण्यमेव साधु कारयन्ति ॥३॥ स ह स्माऽऽह सुचित्तश्शैल्नो[3] यो यज्ञकामो मामेव स वृणीताम् । तत एवैऽनं यज्ञ उपनंस्यति । एवंविद् ह्युद्गायन्तं सर्वा देवता अनुसंतृप्यन्ति । ता अस्मै तृप्तास्तथा कुरिष्यन्ति यथैऽनं यज्ञ उपनंस्यतीऽति ॥४॥ १ । १४॥

तृतीयेऽनुवाके चतुर्थ खण्ड । तृतीयोऽनुवाकस्समाप्त ।



देवा वै स्वर्ग लोकमैप्सन् । तं न श्रयाना नाऽऽसीना न तिष्ठन्तो[2] न धावन्तो नेत येनचन कर्मणाऽऽप्नुवन् ॥ १ ॥ ते देवाः प्रजापतिमुपायन्[3] स्वर्गं वै लोक मीप्सिष्म । तं न शयाना

१ देवत । २ स्रोम । ३ पम्म । ४ देवश्रुत । देवभृत । ययभृत । ५-न ।
१-ऽऽसीना । २-न्तो । ३ उपाय-।

नाऽऽसीना न तिष्ठन्तो न धावन्तो नैव केनचन कर्मणाऽऽपाम। तथा नोऽनुशाधि यथा स्वर्गं लोकमाप्नुयाम[4]ेऽति ॥२॥ तानब्रवीत साम्नाऽनूचेन स्वर्गं लोकम्प्रयाते[5]ऽति । ते साम्नाऽनूचेन स्वर्गं लोकम्प्रायन्[6] ॥ ३ ॥ प्र वा इमे साम्नाऽगुरिति । तस्मात्प्रसाम तस्मादु प्रसाम्यन्नमाचि[7] ॥४॥ देवा वै स्वर्गं लोकमायन्[8] । त एता-न्यृक्पदानि शरीराणि धून्वन्त आयन् । ते[9]स्वर्गं लोकमजयन्॥५॥ तान्या दिवः प्रकीर्णान्यशेरन् । अथेऽमानि प्रजापतिर्ऋक्पदानि शरीराणि सञ्चित्याऽभ्यर्चत् । यद[10]भ्यर्चंस्ता[11] एवर्चोऽभवन् ॥६॥ १ । १५॥

चतुर्थेऽनुवाके प्रथमः खण्डः।

सैऽवर्गभवदियमेव श्रीः । अतो देवा अभवन् ॥१॥ अथेऽपा[1]मिमामसुराश्श्रियमविन्दन्त । तदेवाऽऽसुरमभवत् ॥२॥ ते[2] देवा[3] अब्रुवन् या वै नश्श्रीरभूदविदन्त[4] तामसुरः । कथं न्वेषा-मिमांश्रियम्पुनरेव[5] ज्येमेऽति ॥३॥तेऽब्रुवन्नृच्येव साम गायामेति ।

---

४ प्रयामे । ५ प्रयाते, प्रधामे, प्रयामे । ६ लोकंमप्रायत । ७ इसके बाद कुछ गड़ बड़ है। ५ के पूर्व यह सब में लिखा है 'त एतान्यृक्पदानि शरीराणि धून्वन्त आयन् (त्यंयन्)। ते स्वर्गं लोकमजयन् (–अत्त)। अथेऽमानि प्रजापतिर्...ताएवर्चोऽभवन् । ८ यत् । ९ ओम् । ते स्वर्गं अजयन्, यहां अधिक है। १० ओम । यद्...... । ११ ओम । ता एव।

१ आस्–। २ तद्। ३ एवा । ४ विन्दन्त । ५ अव।

ते पुनः मर्त्यादुत्पार्[6] सामाऽगायन । तेनाऽस्माल्लोकाद-सुरानुदन्त ॥४॥ तद्वै माध्यन्दिने च सवने तृतीयसवने[7] च नर्चोऽपराधोऽस्ति[8]। स यत्ते ऋचि[9] गायति तेनाऽस्माल्लोकाद् द्विषन्तम्भ्रातृव्यं नुदते । अथ यदमृते[10] देवतासु गायत्रसवनं गायति तेन स्वर्गं लोकमेति ॥५॥ प्रजापतिर्वै साम्नेऽमां जितिमजयद्याऽस्ये-ऽपि जितिस्ताम[11] । स स्वर्गं लोकमारोहन्[12] ॥६॥ ते देवाः प्रजापति-मुपेत्याऽब्रुवन्त्स्मभ्यमपीदं साम प्रयच्छेति । तथेति । तदेभ्य-स्साम प्रायच्छत ॥७॥ तदेनानिदं साम स्वर्गं लोकं नाऽशक्नोद्[13] वोढुम ॥८॥ ते देवाः प्रजापति मुपेत्याऽब्रुवन् यद्वै नस्साम मादा इदं वै न स्वर्गं लोकं न शक्नोति[14] वोढुमिति ॥९॥ तद्वै पाप्मना संसृजतेति । कोऽस्य पाप्मेति । ऋगिति । तदृचा समसृजन् ॥१०॥ तद्धिदम्प्रजापतेर्गेयमागामनिष्टुदिदं वै मा तत्पाप्मना सम-स्राक्षुरिति[15] । सोऽगीयस्यैतेन व्यावर्तयाद्वयैव स पाप्मना वर्तीत इति ॥११॥ स य एतदृचा प्रातस्सवने व्यावर्तयति व्येव[16] स पाप्मना वर्तते ॥१२॥ २ । १६॥

चतुर्थेऽनुवाके द्वितीय खण्ड ।

---

६-दुत्थल । ७ गीत-।८-पराधो । ९-र्चि । १०-मृते । ११ तम। १२ मर(-। १3 न कामाय्ते, न कामयते । १४ फामाय्-, सामय्,। १५संस्र-। १६ पय।

नदाहुर्यदोवा ओवा। इति गीयते कात्रर्भवति क सामेति॥१॥ प्रस्तुवन्नेवाष्टाभिरक्षरैः प्रस्तौति। अष्टाक्षरा गायत्री। अक्षरमक्षरं त्र्यक्षरम्। तच्चतुर्विंशतिस्सम्पद्यन्ते। चतुर्विंशत्यक्षरा गायत्री॥२॥ तामेताम्प्रस्तावेनर्[1]चमाप्त्वा या श्रीर्याऽपचितिर्यस्स्वर्गो[2]लोको यद्यशो यदन्नाद्यं नान्यागायमान आस्ते॥३॥ १।१७॥

चतुर्थेऽनुवाके तृतीयः खण्ड।

प्रजापतिर्देवानसृजत[1]। तान् मृत्युः पाप्मान्वसृज्यत॥१॥ ते देवा प्रजापतिमुपेत्याब्रुवन् कस्मादु[2] नोऽसृष्ठा[3] मृत्युं चेन्नः पाप्मानमन्ववस्रक्ष्य[4]न्नासियेति॥२॥ तानब्रवीच्छन्दांसि सम्भरत। तानि यथायतनम्प्रविश[5]त ततो मृत्युना पाप्मना व्यावर्त्स्य[6]थेति॥३॥ वसवो गायत्रीं समभरन्। तां ते प्राविशन्। तान् साऽच्छादयत ॥४॥ रुद्रास्त्रिष्टुभं समभरन्। तां ते प्राविशन्। तान् साऽच्छादयत[7]॥५॥ आदित्या जगतीं समभरन्। तां ते प्राविशन्। तान् साऽच्छादयत॥६॥ विश्वेदेवा अनुष्टुभं समभरन्। तां ते प्राविशन्। तान् साऽच्छादयत॥७॥ तान् अस्यामृच्यस्वरायाम्[8]मृत्युर्निरजा-

१ प्रस्तावेप्रस्नवेन। २-र्गो।

१ ता, ताः। २ कस्मा। ३-ष्टा। ४-स्रक्ष्यन्। ५-शन्। ६-त्स्य, त्स्य्-। ७ च्छाद्, याम।

नायथा मणौ मणिसूत्रम्परिपश्येदेवम् ॥८॥ ते स्वरम्प्राविशन् । तान् स्वरे सतो न निरजानात् । स्वरस्य तु घोषेणाऽन्वैत् ॥९॥ त ओमित्येतदेवाक्षरं समारोहन् । एतदेवाक्षरं त्रयीविद्या । यददोऽमृतं तपति तत्प्रपद्य ततो मृत्युना पाप्मना व्यावर्तन्त ॥१०॥ एवमेवैवं विद्वान् ओमित्येतदेवाक्षरं समारुह्य यददोऽमृतं तपति तत्प्रपद्य ततो मृत्युना पाप्मना व्यावर्तते ऽथो यस्यैवं विद्वानुद्गायति ॥११॥ १।१८॥

चतुर्थेऽनुवाके चतुर्थं खण्ड । चतुर्थोऽनुवाकस्समाप्तः ॥

---

अथैतदेकविंशं साम ॥१॥ तस्य अग्निरेव विद्या हिङ्कारः । अग्निर्वायुरसावादित्य एष प्रस्तावः । इम एव लोका आदिः । तेषु हीदं लोकेषु सर्वमाहितम् । श्रद्धा यज्ञो दक्षिणा एष उद्गीथः । दिशोऽवान्तरदिश आकाश एष प्रतिहारः । आपः प्रजा ओषधय एष उपद्रवः । चन्द्रमा नक्षत्राणि पितर एतन्निधनम् ॥२॥ तदेतदेकविंशं साम । स य एवमेतदेकविंशं साम वेदैतेन हास्य

---

८–वेद् । ९ नास्ति । १० ओ । ११–वेद् । १२ यददो, ओ ।

१ र्वे । २ वायसुर । ३ येषु । ४–क्षा ।

सर्वेणोद्गीतम्भवत्येतस्माद्धैव[5] सर्वस्मादात्मनोऽन्यने[6] य एव विद्वांसमुप-वदति ॥३॥ ११९॥

पञ्चमाऽनुवाकस्समाप्त ।

— ६ —

इदमेवेदमग्रेऽन्तरिक्षमासीत्[1] । तद्धैवाप्येतर्हि ॥१॥ तद्यदेतदन्तरिक्षं[1][2] य एवाऽयम्पवत[3][4] एतदेवान्तरिक्षम्[1] । एष ह वा अन्तरिक्षनाम[1][5] ॥२॥ एष उ एवैष विततः तद्यथा काष्ठेन पलाशौ विष्कब्धे स्यातामक्षेण वा चक्रावेवमेतेनेमौ[6][7] लोकौ विष्कब्धौ ॥३॥ तस्मिन्निदं सर्वमन्तः । तद्यदस्मिन्निदं[8] सर्वमन्तस्तस्मादन्तर्यक्षम[9] । अन्तर्यक्षं ह वै नामैतत् । तदन्तरिक्षमिति[1] परोक्षमाचक्षते ॥४॥ तद्यथा सूत्राः प्रबद्धाः प्रलम्बे-[10]रन्नेवं हैतस्मिन्सर्वे लोकाः प्रबद्धाः प्रलम्बन्ते ॥५॥ तस्यैतस्य साम्नास्त्रिस्[11] आगास्त्रीण्यागीतानि[12] पङ्क्तिभूतश्चतस्रः प्रतिष्ठा दश प्रगास्सप्त संस्था द्वौ स्तोभावेकं रूपम्[13] ॥६॥ तद्यास्तिस्र आगा इम एव ते[14] लोकाः ॥७॥ अथ यानि (त्रीण्य्) आगीतान्यग्निर्वायुरसा

---

५-अस् । ६ आतृच्योते ।

१-रिक्ष्- । २ अधिक है ' एष ह वा अन्तरीक्षम । ३ पवम । ४ नास्ति । ५-क्षेना- । ६ नवम । ७ एतेनैं । ८ नास्ति । तद् ..... अन्तस् । ९ नास्ति । १०-बन्द- । ११-त्रंस् । १२ अगमा । १३ एक-रैपम, एकरूपम । १४ तो ।

यादित्य एतान्यागीतानि । न ह वै कांचनश्रियमपराप्नोति य एवं वेद ॥८॥ १।२०॥

षष्ठेऽनुवाके प्रथम खण्ड' ।

अथ याःषड् विभूतय ऋतवस्ते ॥१॥ अथ याश्चतस्रः प्रतिष्ठा इमा एव ताश्चतस्रोदिशः ॥२॥ अथ ये दश प्रगा इम एव ते दश प्राणाः ॥३॥ अथ यास्सप्त संस्था या एवैतास्सप्ताहोरात्राः प्राचीर्वषट्कुर्वन्ति ता एव ताः ॥४॥ अथ यौ द्वौ स्तोभावहोरात्रे एव ते ॥५॥ अथ यदेकरूपं कर्मैव तत् । कर्मणा हीदं सर्वं विक्रियते ॥६॥ तस्यैतस्य साम्नोदेवा आजिमायन् । स प्रजापतिर्हिंकारमुदजयदग्निस्तेजसा प्रस्तावं रूपेण बृहस्पतिरुद्गीथं स्वधया पितरः प्रतिहारं वीर्येणेन्द्रोनिधनम् ॥७॥ अथेतरे देवा अन्तरिता इवासन् । त इन्द्रमब्रुवन् तव वै वयं स्मोऽनु न एतस्मिन् सामन्याभजेति॥८॥ तेभ्यस्स्वरम्प्रायच्छत् । तम्प्रजापतिरब्रवीत्कथेत्थमकः। सर्वं वा एभ्यस्साम प्रादाः । एतावद्वाव साम यावान् स्वरः भ्रूगरा एषते स्वराद्भवतीति ॥९॥ सोऽब्रवीत् पुनर्वाअहमेषामेतं रसमादास्य इति । तानब्रवीऽदुप मा गायत । अभि मा स्वरतेति । तथेति

---

१ नास्ति । सप्त········एतास् । २-प्रा । ३ यर्प- । ४ घद् । ५ रेपि । ६-सं । ७ नावय । ८-रम । ६ सयर्- । १० पयो, पयोम ।

॥१०॥ तमुपागायन् । तमभ्यस्वरन् । तेषाम्पुनारसमादत्त[११] ॥११॥ ११२१॥

षष्ठेऽनुवाके द्वितीय खण्ड ।

स यथा मधुधाने[१] मधुनाळीभिर्म्यासिञ्चादेवमेव तत्सामन् पुना रसमासिञ्चन् ॥१॥ तस्मादु ह नोऽपगायेत् । इन्द्र एष यदुद्गाता । स यथा सारमेषां[२] रसमादत्त एवमेष तेषां रसमादत्ते ॥२॥ कामं ह तु यजमान उपगायेद्यजमानस्य हि तद्ब्रवसथो ब्रह्मचार्याचार्योक्तः ॥३॥ तदु वा आहुर्नैव गायेत् । दिशो ह्युपागायन्[३] दिशामेव सलोकतां जयतीति[४] ॥४॥ ते य एवेमे[५] मुख्याः[६] प्राणा एत एवोद्गातारश्चोपगातारश्च । इमे ह त्रय उद्गातार इम उ चत्वार उपगातारः ॥५॥ तस्मादु चतुर एवोऽपगातॄन्[७] कुर्वीत। तस्मादुहोऽपगातॄन्[८] मद्याभिमृशेदिन्द्रस्य्थश्रोत्रं मे माहिंसिष्टेति ॥६॥ स यस्स रस आसीद एवायम्पवत एष एव स रसः ॥७॥ स यथा मध्वालोपमद्यादिति ह स्माह सुचित्तश्शैलन एवमेतस्य रसस्यात्मानम्पूरयेत। स एवोद्गातात्मानं च यजमानं चामृतत्वं गमयतीति ॥८॥ १।२२॥

षष्ठेऽनुवाके तृतीय खण्ड । षष्ठोऽनुवाकस्समाप्त ।

---

११–त्ता ।

१–धुवने । २ 'स' अधिक पाठे । ३–यत् । ४–शम् । ५ एवं । ६ ष । ७ ऽद्गा–, –तृन् । ८–तृन् ।

अयमेवेदमग्र आकाश आसीत् । स उ एवाप्येतर्हि ॥१॥ स यस्स आकाशो वागेव सा । तस्मादाकाशाद्वाग्वदति ॥२॥ तामेतां[1] वाचम्प्रजापतिरभ्यपीळयत् । तस्या अभिपीळितायै रसः[2] प्राणेदत्[3] । त एवेमे लोका अभवन् ॥३॥ स[4] इमाँ लोकानभ्यपीळयत् । तेषामभिपीळितानां रसः प्राणेदत् । ता एवैता देवता अभवन्नग्निर्वायुरसावादित्य[5] इति ॥४॥ स एता देवता अभ्यपीळयत् । तासामभिपीळितानां रसः प्राणेदत् । सा त्रयीविद्याभवत् ॥५॥ स[6] त्रयीं विद्यामभ्यपीळयत् । तस्या अभिपीळितायै रसः प्राणेदत् । ता एवैता व्याहृतयोऽभवन् भूर्भुवस्स्वरिति ॥६॥ स एता व्याहृतीरभ्यपीळयत् । तासामभिपीळितानां रसः प्राणेदत् । तदेतदक्षरमभवदोमिति यदेतद् ॥७॥ स एतदक्षरमभ्यपीळयत् । तस्याऽभिपीळितस्य[7] रसः प्राणेदत् ॥८॥ १।२३॥

सप्तमेऽनुवाके प्रथमः खण्डः ।

तदक्षरदेव । यदक्षरदेव तस्मादक्षरम् ॥१॥ यद्वेवाक्षरं[1] नाक्षीयत तस्मादक्षयम् । अक्षयं ह वै नामैतत् । तदक्षरमिति

१. एता था । २ रसम् । ३ 'स त्रयीम ······ रसम् (!) प्राणेदत्' अधिक है । ४ नास्ति । ५–त्या । ६ नास्ति । स त्रयीम ·· प्राणेदत् । ७–स्य ।

१–या ।

परोक्षमाचक्षते ॥२॥ तद्धैतदेक ओमिति गायन्ति । तत्तथा न गायेत । ईश्वरो हैनदेतेन रसेनान्तर्गातोः[२] । अथो[३] द्वै[४] इत्वैवम्भवत ओमिति । ओ इत्यु हैके गायन्ति । तदु ह[५] तत्र[६] गीतम । नैव[७] तथा गायेत् । ओं[८] इत्येव गायेत् । तदेनदेतेन रसेन सन्दधाति ॥३॥ तदेतं रसं तर्पयति । रसस्तृप्तोऽक्षरं तर्पयति । अक्षरं[९] तृप्तं व्याहृती स्तर्पयति । व्याहृतयस्तृप्तावेदाँस्तर्पयन्ति । वेदास्तृप्ता देवतास्तर्पयन्ति । देवतास्तृप्ता लोकाँस्तर्पयन्ति । लोकास्तृप्ता अक्षरं तर्पयन्ति । अक्षरं तृप्तं वाचं तपर्यति[१०] । वाक्[११] तृप्ताकाशं तर्पयति । आकाशस्तृप्तः प्रजास्तर्पयाति । तृप्यति प्रजया पशुभिर्य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति[१२] ॥४॥ १।२४॥

सप्तमेऽनुवाके द्वितीय खण्ड । सप्तमोऽनुवाकस्समाप्तः ।

—— ०:——

अयमेवेदमग्र[१] आकाश आसीत् स उ एवाप्येतर्हि ॥१॥ स यस्स आकाश आदित्य एव स । एतस्मिन् ( ह्यु ) उदिते[२] सर्वमिदमाकाशते ॥२॥ तस्य मर्त्यामृतयोर्वै[३] तीराणि[४] समुद्र एव ।

---

२ या– । ३–थे । ४ द्वै, द्वै । ५ नास्ति । ६ नि– । ७ ने एव । ८ ओ । ९ अक्षरं ·········वाचं तर्पयति यह पाठ नहीं । १०–यन्ति । ११ वाक्स् । १२ गायन्त ।

१ इद् (!) । २ सुदिते । ३ येवं । ४ तरणी ।

तद्यत्समुद्रेण परिगृहीतं तन्मृत्योराप्तमथ यत्परं तदमृतम् ॥३॥ स यो ह स समुद्रो य एवायम्पवत एष एव स समुद्रः । एतं हि संद्रवन्तं[6] सर्वाणि भूतान्यनुसंद्रवन्ति[7] ॥४॥ तस्य[8] द्यावापृथिवी एव रोधसी । अथ यथा नद्यां[9] कंसानि[10] वा महीणानि[11] स्युस्सरांसि वै-व मस्यायम्पार्थिवस्[12]समुद्रः ॥५॥ स एष पार एव समुद्रस्योदेति । स उद्यन्नेव वायोः पृष्ठ आक्रमते । सोऽमृतादेवोदेति । अमृतमनु-संचरति । अमृते प्रतिष्ठितः[13] ॥६॥ तस्यैतत् त्रिरूपम्मृर्ध्यारनाप्तं शुक्लं कृष्णम्पुरुषः ॥७॥ तद्यच्छुक्लं तद्वाचोरूपमृचोऽग्नेर्मृत्योः । सा या सा[14] वाक्[15] सा । अथ योऽग्निर्मृत्युस्सः ॥८॥ अथ यत्कृष्णं तदपां रूपमन्नस्य[16] मनसोयजुषः । तद्यास्ता[17] आपोऽन्नं तत् । अथ यन्मनो यजुरेव ॥९॥ अथ यः पुरुषस्स प्राणस्तत्साम-तद्ब्रह्म तदमृतम् । स यः प्राणस्तत्साम । अथ यद्ब्रह्म तदमृतम् ॥१०॥ १।२५॥

अष्टमेऽनुवाके प्रथमः खण्डः ।

अथाध्यात्मम् । इदमेव चक्षुस्त्रिरूपं शुक्लं कृष्णम्पुरुषः ॥१॥ तद्यच्छुक्लं तद्वाचो रूपमृचोऽग्नेर्मृत्योः । सा या सा वाक्[1] सा[2] ।

---

५–गृह–। ६–द्रे–। ७ अनुद्र–। ८–या। ९–याम्। १० कसा-नि। ११ महीणद्वीनि। १२ अधिक है 'सस्'. स। १३ प्रतिनिष्ठत'। १४ वाक्, वाग्। १५ अत्। १६ अन्नमस्य। १७ नास्ति, तथा.–यः पुरुषस्॥ १ शृत्। २ अधिक 'ऽस्मा'।

अथ योऽग्निर्मृत्युस्सः ॥२॥ अथ यत्कृष्णं तदपां रूपमन्नस्य मनसो यजुषः । तयास्ता आपोऽन्नं तत् । अथ यन्मनो यजुष्टत् ॥३॥ अथ यः पुरुषस्य प्राणस्तत्साम तद्ब्रह्म तदमृतम् । स यः प्राणस्तत्साम । अथ यद्ब्रह्म तदमृतम् ॥४॥ सैऽषोऽत्क्रान्तिर्ब्रह्मणः । अथातः पराक्रान्तिः ॥५॥ सा या साऽऽक्रान्तिर्विद्युदेव सा । स यदेव विद्युतो विद्योतमानायै श्येतं रूपम्भवति तद्वाचो रूपमृचोऽग्नेर्मृत्योः ॥६॥ यद्वेव विद्युतस्संद्रवन्त्यै नीलं रूपम्भवति तदपां रूपमन्नस्य मनसो यजुषः ॥७॥ य एवैष विद्युति पुरुषस्य प्राणस्तत्साम तद्ब्रह्म तदमृतम् । स यः प्राणस्तत्साम । अथ यद्ब्रह्म तदमृतम् ॥८॥ १।२६॥

अष्टमेऽनुवाके द्वितीयः खण्डः ।

स हैषोऽमृतेन परिवृढो मृत्युमध्यास्तेऽन्नं कृत्वा ॥१॥ अथैऽष एव पुरुषो योऽयं चक्षुषि । य आदित्ये सोऽतिपुरुषः । यो विद्युति स परमपुरुषः ॥२॥ एते ह वाव त्रयः पुरुषाः । आ हास्यैते जायन्ते ॥३॥ स योऽयं चक्षुष्येषोऽनुरूपो नाम । अन्वङ् ह्येष

---

३–षो । स्त् (!) । ४–त्त् । ५ नास्ति । ६ श्वेतं । ७–न्त्–। ८–दे । ९–आ ।

१–सी । २–यो । ३–षो,-षा,-ष । ४–वज्र । ५ ह् ।

सर्वाणि रूपाणि । तमनुरूप इत्युपासीत । अन्वञ्चि[६] हैनं[७] सर्वाणि रूपाणि भवन्ति ॥४॥ य आदर्शे स प्रतिरूपः । प्रत्यङ् ह्येष सर्वाणि रूपाणि । तम्प्रतिरूप इत्युपासीत । प्रत्यञ्चि[८] हैनं सर्वाणि रूपाणि भवन्ति ॥५॥ यो विद्युति स[९] सर्वरूपः । सर्वाणि[९] ह्येतस्मिन् रूपाणि । तं[१०] सर्वरूप इत्युपासीत । सर्वाणि हाऽस्मिन् रूपाणि[११] भवन्ति ॥६॥ एते ह वाव त्रयः पुरुषाः । आ हाऽस्यैते जायन्ते य एवं वेदाथो यस्यैवं विद्वानुद्गायति ॥७॥ १।२७॥

अष्टमेऽनुवाके तृतीयः खण्डः । अष्टमोऽनुवाकः समाप्तः ।

---

अयमेवेदमग्र आकाश आसीत् । स उ एवाप्येतर्हि ॥१॥ स यस्स आकाश इन्द्र एव सः । स यस्स इन्द्र एष एव स य एष[१] एव तपति । स एष शतरश्मिर्[illegible]विष्मान् ॥२॥ तस्य वागेव रश्मिः प्राङ् प्रतिष्ठितः । सा वा सा वाग्दशधा[illegible] । स दशधा भवति शतधा सहस्रधाऽयुतधा प्रयुतधा नियुतधाऽर्बुदधा[२] न्यर्बुदधा निखर्वधा[३] पद्मधाक्षिति[४]र्व्योमान्तः[५] ॥ ३ ॥ स एष एतस्य रश्मिर्वा-

---

६–र्वाणि,-ञ्चि,-षि । ७ हैनम । ८ प्रत्यं । ९ अधिक है 'रूपाणि,' नास्ति–नी .. ..... रूपाणि ।

१ नास्ति । २ अर्–। ३ निखर्वाधं । ४–ति । ५–त, स्तोम–।

म्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च वदत्येतस्यैव[6]
रश्मिना वदति[7] ॥४॥ अथ[8] मनोमयो दक्षिणा[9] प्रतिष्ठितः । तद्य-
[10]त्तन्मनश्चन्द्रमास्सः । स दशधा भवति ॥५॥ स एष एतस्य रश्मिर्मनो
भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च मनुत एतस्यैव
रश्मिना मनुते ॥६॥ अथ चक्षुर्मयः[11] प्रत्यङ्[12] प्रतिष्ठितः[13] । तद्यत्तच्चक्षु[14]-
रादित्यस्सः । स दशधा भवति ॥७॥ स एष एतस्य रश्मिश्चक्षु-
र्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च पश्यत्येतस्यैव
रश्मिना पश्यति ॥८॥ अथ श्रोत्रमय उदङ् प्रतिष्ठितः[15] । तद्यत्तच्छ्रोत्रं
दिशस्ताः । स दशधा भवति ॥९॥ स एष एतस्य रश्मिश्श्रोत्र-
म्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च शृणोत्येतस्यैव
रश्मिना शृणोति ॥१०॥ १।२८॥

नवमेऽनुवाके प्रथमः खण्डः ।

अथ प्राणमय ऊर्ध्वः प्रतिष्ठितः[1] । स यस्स प्राणो वायुस्सः ।
स[2] दशधा भवति ॥१॥ स एष एतस्य रश्मिः प्राणो भूत्वा सर्वास्वासु
प्रजासु प्रत्यवस्थितः । स यः कश्च प्राणित्येतस्यैव रश्मिना प्राणिति

---

६ पदयति । ७ पदयति । ८ नास्ति । ९ दक्षरा । १० मन्यद् ।
११ चक्षुम- । १२ -य । १३ वस्थित । १४ त, नास्ति । १५ प्रत्यवस्थित ॥

१ -स्य- । २ नास्ति ।

॥२॥ अथाऽमुमयास्तिर्यङ् प्रतिष्ठितः । स ह[3] स ईशानो नाम । स दशधा भवति[4] ॥३॥ स एष एतस्य रश्मिरमुर्भूत्वा सर्वास्वासु प्रजासु प्रसवास्थितः । स यः कश्चाऽमुमानेतस्यैव रश्मिनाऽमुमान् ॥४॥ अथाऽन्नमयोऽर्वाङ् प्रतिष्ठितः । तद्य[5]च्च[6]दन्नमापस्ता[7]: । स दशधा भवति शतधा सहस्रधाऽयुतधा प्रयुतधा नियुतधाऽर्बुदधान्यर्बुदधा निखर्वधा[8] पद्ममक्षितिर्व्योमान्तः[9] ॥५॥ स एष एतस्य रश्मिरन्नम्भूत्वा सर्वास्वासु[10] प्रजासु प्रसवास्थितः । स यः कश्चाश्नसैतस्यैव रश्मिना-श्नाति ॥६॥ स एष सप्तरश्मिर्वृषभस्तुविष्मान् । तदेतदृचा[11]ऽभ्यनूच्यते

यस्सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्तसिन्धून् ।
यो रौहिण[12]मस्फुरद्वज्रबाहुर्द्या[13]मारोहन्तं[14] स जनास इंद्र इति

॥७॥ यस्सप्तरश्मिरिति । सप्त ह्येत आदित्यस्य रश्मयः । वृषभ इति । एष ह्येवाऽऽसाम्प्रजानामृषभः । तुविष्मानिति । महीयैऽवा[15] स्यैषा ॥८॥ अवासृजत् सर्तवे सप्तसिन्धूनिति । सप्तधेनेसिन्धवः ।

---

३ स्थान खाली है 'स''' ई' । ४-यन्ति । ५ 'यत्' के पश्चात् 'नतद्धुर्द नाम' पाठ है, 'तदन्नम'''' स' नहीं है । ६ यँदन्नम । ७ तेद्रा, पा । ८ निम्वर्वांचम, निमर्वंधाच्च । ९ यं म–। १० सामास्व् ११ नास्ति तदेतद् '' वृषभस्तुविष्मान् । १२ रोह्–। १३–द्यु । १४–न । १५ मह्ये ।

तैरिदं सर्वं सितम । यद्यदेतैरिदं सर्वं सितं तस्मात्सिन्धवः ॥९॥ यो रौहिणमस्फुरद्वज्रबाहुरिति । एष (हि) रौहिणमस्फुरद्वज्रबाहुः ॥१०॥ द्यामारोहन्तं[16] स जनास इन्द्र इति । एष हीन्द्रः ॥११॥ १।२९॥

नवमेऽनुवाके द्वितीयः खण्डः।

तद्यथा गिरिम्पन्थानस्समुदियुरिति हस्माऽऽह शाट्यायनि-रेयमेत आदित्यस्य रश्मय[1] एतमादित्यं सर्वतोऽपियन्ति[2] । स हैवं विद्वानोमित्याददान एतैरेतस्य रश्मिभिरेतमादित्यं सर्वतोऽप्येति ॥१॥ तदेतत् सर्वतो द्वारमनिषेधं[3] साम । अन्यतोद्वारं[4] हैऽनदेके[5][6] एवा-[7]ऽभ्रङ्गमुपासते[8] । अतोऽन्यथा[9] विदुः[10] ॥२॥ अथ य एतदेवं वेद स एवैतत् सर्वतो द्वारमनिषेधं सामवेद ॥३॥ सा एषा विद्युत् । (यद्) एतन्मण्डलं समन्तम्परिपतति तत्साम । अथ यत्परमतिभाति स पुण्यकृत्साये रसः । तमभ्यतिमुच्यते ॥४॥ तदेतदभ्रातृव्यं[11] साम । न ह वा इन्द्रः कंचन भ्रातृव्यम्पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यम्पश्यत एवमेव न कंचन भ्रातृव्यम्पश्यते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥५॥ १।३०॥

नवमेऽनुवाके तृतीयः खण्डः । नवमोऽनुवाकस्समाप्तः ।

———:०:———

१६ स्थान खाली है–हन्–खाला,–हन्तं ।

१ एवम । २ तिप्रतिधियन्ति। ३ अनुष्–। ४ नास्ति । ५ नल, त। ६ नास्ति । ७ एनाव, एना । ८ गम... । ९ एतो। १० विदु। ११–दृवि ॥

अयमेवेदमग्र आकाश आसीत् । स उ एवाऽप्येतर्हि । स यस्स आकाश इन्द्र एव सः । स यस्सइन्द्रस्सामैवतद् ॥१॥ तस्यैतस्य साम्न इयमेव प्राचीदिग्घिङ्कार इयम्प्रस्ताव इदमादिरियमुद्गीथोऽसौ प्रतिहारोऽन्तरिक्षमुपद्रव इयमेवनिधनम् ॥२॥ तदेतत्सप्तविधं साम । स य एवमेतत्सप्तविधं साम वेद यस्किञ्च प्राच्यां दिशि यां देवता ये मनुष्या ये पशवो यदन्नाद्यं तत्सर्वं हिङ्कारेणाप्नोति ॥३॥ अथ यद्दक्षिणायां दिशि तत्सर्वं प्रस्तावेनाप्नोति ॥ ४ ॥ अथ यत्प्रतीच्यां दिशि तत्सर्वमादिनाप्नोति ॥५॥ अथ यदुदीच्यांदिशि तत्सर्वमुद्गीथेनाप्नोति ॥६॥ अथ यदमुष्यां दिशि तत्सर्वम्प्रतिहारेणाप्नोति ॥७॥ अथ यदन्तरिक्षे तत्सर्वमुपद्रवेणाप्नोति ॥८॥ अथ यदस्यां दिशि या देवता ये मनुष्या ये पशवो यदन्नाद्यं तत्सर्वं निधनेनाप्नोति ॥९॥ सर्वं हैवाऽस्याऽऽप्तम्भवति सर्वं जितं न हाऽस्य कश्चन कामोऽनाप्तो भवति य एवं वेद ॥१०॥ स यद्वकिञ्च किञ्चैवं विद्वानेषु लोकेषु कुरुते स्वस्य हैव तत्स्वतः कुरुते । तदेतदृचाऽभ्यनूच्यते ॥११॥ ११३१॥

दशमेऽनुवाके प्रथम खण्डः ।

---

१ दार् । २-रंच्_। ३ पत् । ४ 'मनुष्या' अधिक है । ५-वा । ६ यहां चौथा श्लोक (मन्त्र) अधिक है और साथ ही प्रतिहारेण 'प्रस्तावेन' के स्थान में । ७ 'प्रच्यात्' अधिक है । ८ 'दक्षिणायांदिशि' ॥

यदू द्याव इन्द्र ते शतं शतम्भूमीरुत[1] स्युः । न त्वा वज्रिन्त्सहस्रं सूर्या[2] अनु न[2] जातमष्ट रोदसी इति ॥१॥ यदू द्याव इन्द्र ते शतं शतम्भूमीरुतस्युरिति । यच्छतं द्यावस्स्युश्शतम्भून्यस्ताभ्य एष एवाऽऽकाशो ज्यायान्[4] ॥२॥ न त्वा वज्रिन्त्सहस्रं सूर्या अन्विति । न हैतं सहस्रं चन सूर्या अनु ॥३॥ न[3] जातमष्ट रोदसी इति । न हैतं जाता रोदन्ति । इमे ह वाव रोदसी ताभ्यामेष एवाकाशो ज्यायान् । एतस्मिन् ह्येवैते अन्तः ॥४॥ स यस्स आकाश इन्द्र एव सः । स[5] यस्स इन्द्र एष एव स य एष तपति ॥५॥ स एषोऽभ्रा[6]ण्यतिमुच्यमान[7] एति । तद्यथैषोऽभ्रा[6]ण्यतिमुच्यमान एवैवमेव स सर्वस्मात्पाप्मनोऽतिमुच्यमान एति य एवं वेदाथो यस्यैवं विद्वानुद्गायति ॥६॥ २।३०॥

दशमेऽनुवाके द्वितीय खण्ड । दशमोऽनुवाकस्समाप्त ।

———०———

त्रिरुत्सव चतुरुत्स्यात् । ब्रह्म तृतीयमिन्द्रस्तृतीयम्[1] प्रजापति[1]स्तृतीयमन्नमेव चतुर्थः पादः ॥१॥ तद्वै ब्रह्म स प्राणोऽथ य इन्द्र-

१ नास्ति । २—या । ३ नास्ति । ४—यन् । ५ नास्ति, स—स ।
६ स्थान खाली 'य' तक । ७—मानय्,—यमानय ॥

स्सा वागथ यः प्रजापतिस्तन्मनोऽन्नमेव चतुर्थः पादः ॥२॥ मन एव हिङ्कारो वाक्प्रस्तावः प्राण उद्गीथोऽन्नमेव चतुर्थः पादः ॥३॥ करांस्येव वाचा नयति प्राणेन गमयति मनसा। तद्देवाभिरुद्धं यन्मनः। तेन यत्र कामयते तदात्मानं च यजमानं च दधाति ॥४॥ अथाधिदैवतं[२]। चन्द्रमा एव हिङ्कारोऽग्निः प्रस्ताव आदित्य उद्गीथ आप एव चतुर्थः पादः[३]। तद्धि प्रत्यक्षमन्नम् ॥५॥ ता वा[४] एता देवता अमावास्यां रात्रिं संयन्ति। चन्द्रमा अमावास्यां रात्रिमादित्यम्प्रविशत्यादित्योऽग्निम् ॥ ६ ॥ तत्सर्वं संयन्ति[५] तस्मात्साम। सं[६] ह वै सामवित्स साम वेद य एवं वेद ॥७॥ तासां वा एतासां देवतानामेकैकैव देवता साम भवति ॥८॥ एष एवादित्यस्त्रिवृच्चतुष्पाद्रश्मयो मण्डलम्पुरुषः। रश्मय एव हिङ्कारः। तस्मात्ते प्रथमत एवोद्यतस्तायन्ते। मण्डलम्प्रस्तावः पुरुष उद्गीथो या[७] एता आपोऽन्तस्स एव चतुर्थः पादः ॥९॥ एवमेव चन्द्रमसो रश्मयो मण्डलम्पुरुषः। रश्मय एव हिङ्कारो मण्डलम्प्रस्तावः पुरुष उद्गीथो या एता आपोऽन्तस्स[८] एव चतुर्थः पादः ॥१०॥ चत्वार्यन्यानि चत्वार्यन्यानि। तान्यष्टौ[९]। अष्टाक्षरा गायत्री गायत्रं साम ब्रह्म उ[८] गायत्री[९]। तदु ब्रह्माऽभिसम्पद्यते। अष्टाशफाः पशवस्तेनोपशव्यम् ॥११॥ २।३३॥

पञ्चदशोऽनुवाके प्रथमः खण्डः।

---

२-दैवत-। ३-मर्मा। ४-मा। ५ सय-। ६-सं। ७ नास्ति। ८ उ। ९-ष्टौ,त्रं॥

अथाऽध्यात्मम्।इदमेव चक्षुस्त्रिवृच्चतुष्पाच्छुक्लं कृष्णम्पुरुषः। शुक्लमेव हिङ्कारः कृष्णम्प्रस्तावः पुरुष उद्गीथो या इमा आपोऽन्तस्स एव चतुर्थः पादः॥१॥इदमादित्यस्यायनमिदं चन्द्रमसः। चत्वारीमानि चत्वारीमानि।तान्यष्टौ।अष्टाक्षरा गायत्री।गायत्रं साम ब्रह्म उ गायत्री। तद्ब्रह्माभिसम्पद्यते[३]।अष्टाशफाः पशवस्तेनो पशव्यम्॥२॥ स यो ऽयम्पवते स[२] एष एव[२] प्रजापतिः। तद्वेव साम।तस्यायं देवो योऽयं चक्षुषि पुरुषः। स एष आहुतिमतिमत्योत्क्रान्तः॥३॥ अथ यावेतौ चन्द्रमाश्चादित्यश्च यावेतावप्सु दृश्येते[३] एतावेतयोर्देवौ[४]॥४॥ यद्द् वा इदमाहुर्देवानां देवा इत्येते ह ते। त एत आहुतिमतिमत्योत्क्रान्ताः॥५॥ तद्ध प्रथुर्वैन्यो दिव्यान्व्रात्यान्पप्रच्छ[५] येभिर्वात इषितः प्रवाति ये ददन्ते पञ्च दिशस्समीचीः[७]। य आहुतीरत्यमन्यन्त[८] देवा[९] अपां[१०] नेतारः कतमे त आसन्निति॥६॥ ते ह प्रत्यूचु रिमामेषाम्पृथिवीं वस्त एको-ऽन्तरिक्षम्पर्येको[११] बभूव। दिवमेको ददते यो विधर्ता[१२] विश्वा आशाः प्रतिरक्षन्त्यन्य[१३] इति॥७॥इमामेषाम्पृथिवीं

१-पादू-। २ नास्ति। ३-यते। ४ एता उ। ५ तान्। ६ पभिर्। ७ दशास्, दश। ८-ईर्। ९ इत्यम-। १० पराह्। ११-ईच्-। १२-धत्ता। १३ अन्य्।

वस्त एक इत्यभिर्हसः ॥८॥ अन्तरिक्षम्पर्येकोवभूवेतिवायुर्हे सः ॥९॥ दिवमेको ददते यो विधर्तेऽऽदित्यो ह सः ॥१०॥ विश्वा आशाः प्रतिरक्षन्त्यन्य इति । एता ह वै देवता विश्वा आशाः प्रतिरक्षन्ति चन्द्रमा नक्षत्राणीति । ता एतास्सामैव सतो व्यूढोऽऽख्याय ॥११॥ १ । ३४ ॥

एकादशोऽनुवाके द्वितीयः खण्डः । एकादशोऽनुवाकस्समाप्तः ।

---

अथैतत्साम । तदाहुस्संवत्सर एवसामेति ॥१॥ तस्य वसन्त एव हिङ्कारः । तस्मात्पशवो वसन्ता हिङ्करिक्रतस्समुदायन्ति ॥२॥ ग्रीष्मः प्रस्तावः । अनिरुक्तो वै प्रस्तावोऽनिरुक्त ऋतूनां ग्रीष्मः ॥३॥ वर्षा उद्गीथः । उदिव वै वर्षंगायति ॥४॥ शरत्प्रतिहारः । शरदि ह खलु वै भूयिष्ठा ओषधयः पच्यन्ते ॥५॥ हेमन्तो निधनम् । निधनकृता इव वै हैमन्मना भवन्ति ॥६॥ तावेतावन्तौ संधत्तः । एतदन्वनन्तस्संवत्सरः । तस्यैतावन्तौ यद्धेमन्तश्चवसन्तश्च । एतदनु ग्रामस्यान्तौ समेतः । एतदनु निष्कस्यान्तौ समेतः । एतदन्वहिर्भोगान्पर्याहितस्याये ॥७॥ तद्यथा ह वै निष्कस्समन्तं ग्रीवा अभिपर्यक्त

---

१४ विधर्त्ते, विधत्ते । १५ अन्त्-, 'न्त्-'-यथा ।

१-करिकिनस्,-करिक्रतस् । २ नामि । ३-तत । ४ सवत्-न ५ श्री-न ६-यत्त ।

एवमनन्तं साम। स य एवमेतदनन्तं साम वेदानन्ततामेव जयति ॥८॥ १।३५॥

द्वादशोऽनुवाके प्रथम- खण्डः।

अथैतत्पर्जन्ये साम। तस्य पुरोवात एव हिङ्कारः। अथ यदभ्राणि सम्प्लावयति स प्रस्तावः। अथ यत् स्तनयति स उद्गीथः। अथ यद्विद्योतते स प्रतिहारः। अथ यद्वर्षति तन्निधनम् ॥१॥ तदेतत्पर्जन्ये साम। स य एवमेतत्पर्जन्ये साम वेद वर्षुको[१] हास्मै पर्जन्यो भवति ॥२॥ अथैतत् पुरुषे[२] साम। तस्यायमेव हिङ्कारोऽयम्प्रस्तावोऽयमुद्गीथोऽयम्प्रतिहार इदं निधनम् ॥३॥ तदेतत्पुरुषे साम। स य एवमेतत्पुरुषे साम वेदोऽऽर्ध्व एव प्रजया[३] पशुभिरारोहन्नेति ॥४॥ स उ एनत्प्रसम्वेद[४] ये प्रसञ्चो लोकास्ताञ्जयति। तस्यायमेव हिङ्कारोऽयम्प्रस्तावोऽयमुद्गीथोऽयम्प्रतिहार इदं निधनम्। ये प्रसञ्चो लोकास्ताञ्जयति ॥५॥ य उ एनत्तिर्यग्वेद[६] ये तिर्यञ्चो[७] लोकास्ताञ्जयति। तस्य लोमैव हिङ्कारस्त्वक्प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनम् ॥६॥ तस्य त्रीण्यायाविर्गायति प्रस्तावम्प्रतिहारं[९]

---

७ ऽनन्ताम्।

१-पर्ण्-। २-षो। ३ प्रजा। ४-नं। ५ नास्ति। ६ एन, एनं। ७-र्युच्-, 'म' अधिक है। ८ लाक्-। ९ हिंकारं॥

निधनम् । तस्मात्पुरुषस्य त्रीण्यस्थीन्याविर्दन्ताश्च द्वयाश्चनखाः। ये तिर्यञ्चो लोकास्तांञ्जयति ॥७॥ य उ एनत्संयग्वेद ये सम्यञ्चो लोकास्तांञ्जयति । तस्य मन एव हिङ्कारो वाक्प्रस्तावः प्राण उद्गीथ-श्चक्षुः प्रतिहार श्श्रोत्रं निधनम् । ये सम्यञ्चो लोकास्तांञ्जाति ॥८॥ अथैतद्देवतासु साम । तस्य वायुरेव हिङ्कारोऽग्निः प्रस्ताव आदित्य उद्गीथश्चन्द्रमा प्रतिहारो दिश एव निधनम् ॥९॥ तदेतद्देवतासु साम । स य एवमेतद्देवतासु साम वेद देवतानामेव सलोकतां जयति ॥१०॥ १।३६॥

द्वादशोऽनुवाके द्वितीय खण्ड ।

तस्यैतास्तिस्र आगा आग्नेय्यैन्द्र्येका[1] वैश्वदेव्येका[2] ॥१॥ सा या मन्द्रा[3] साऽऽग्नेयी[4] । तया प्रातस्सवनस्योद्गेयम् । आग्नेयं वै प्रातस्स-वनमाग्नेयोऽयं लोकः। स्वयाऽऽगया प्रातस्सवनस्योऽद्गायत्यृध्नोतीमं लोकम् ॥२॥ अथ[5] या घोषिण्युपब्दिमती[6] सैऽऽन्द्री । तया माध्य-न्दिनस्य[7] सवनस्योद्गेयम् । ऐन्द्रं वै माध्यन्दिनं सवनं मैन्द्रोऽसौ लोकः । स्वयाऽऽगया माध्यन्दिनस्य सवनस्योद्गायत्यृध्नो[8]त्यमुं लोकम् ॥३॥ अथ यां[9] वीङ्खयन्निव मथयन्निव गायति सा वैश्वदेवी । तया

१ येक-: २ ऽन्द्र । ३ नास्ति, सा............ऽद् । ४ मैनघी । ५ नास्ति अथ............योकम । ६-अन्द्री-के लिये स्थान खाली है। ७-ण्ण्दिन । ८-निप्नं । ९ या, ' घोषिण्यु ', भी लिखा है ।

तृतीयसवनस्योद्गेयम । वैश्वदेवं वै तृतीयसवनं वैश्वदेवोऽयमन्तरालोकः । स्वयाऽऽगया तृतीयसवनस्योद्गायत्यृ[10]ध्नोतीममन्तरालोकम् ॥४॥ अथो उच्चा खल्वाहु रेकैयवाऽऽगयोद्गेयं यदेवास्य मध्यं वाच इति । तद्यया वै याचा व्यायच्छमान उद्गायति तदेवास्यमध्यं वाचः । त[11]या वा एतया वाचा सर्वा वाच उपगच्छति। अव्यासिक्तामेकस्थां श्रियमृध्नोति य एवं वेद ॥५॥ अथ या क्रौञ्चा सा बार्हस्पत्या । स यो ब्रह्मवर्चसकामस्स्यात्स[12] तयोद्गायेत् । तद्ब्रह्म वै बृहस्पतिः । तद्वै ब्रह्मवर्चसमृध्नोति तथा ह ब्रह्मवर्चसीभवति ॥६॥ अथ ह चैकितानेय एकस्यैव साम्न आगां गायाति गायत्रस्यैव । तदनवानं गेयम्[13] । त[14]त् साम्न एवा प्रतिहारादनवानं गेयम् । तत्प्राणो वै गायत्रम् । तद्वै प्राणमृध्नोति । तथा ह सर्वमायुरेति ॥७॥ १।३७॥

द्वादशोऽनुवाके तृतीयः खण्ड ।

अथ ह ब्रह्मद[1]त्तं चैकितानेयमुद्गायन्तं कुरव उपोदुरुज्जहि[2]हि साम दाल्भ्येऽति ॥१॥ स होऽपोद्यमानो नितरां जगौ । तं होचुः किमुपोद्यमानो नितरामगासीरिति ॥२॥ स होवाचेदं वै लोमे[3]ऽस्मे-

---

१०–यन्ति । ११ ताया । १२ स, नास्ति । १३ 'वै गायत्रम' नीचे से ले के अधिक लिखा है । १४ 'साम्नस' अधिक है ॥

१ तत् । २ उज्जिहि । ३ सोमे ।

तदेवैतदस्त्वुपस्थ्यमः । तस्माद्द ये न एतदुपायादिपुलोमशानीऽव तेषां श्मशानानि भवितारः । अथ वयमुदेव गातारस्म इति ॥३॥ अथ ह राजा जैवलिर्गलूनसमार्त्तकायण शामूल पर्णाभ्यामुत्थितम्पम-च्छर्चाऽऽगाता शाल्वसा३ साम्ना३ इति ॥४॥ नैव राजन्नृचेति होवाच न साम्नेति । तद्यूय तर्हि सर्वे एव पर्णाभ्यां भविष्यथ य एव विद्वाँसोऽगायतेति॥५॥ अथ यद्वाऽवसयदृचा च साम्ना चाऽऽगामेति धीतेन वै तद्या तयाम्नाऽम्लाकारेनाऽगातेऽति हैनाँस्तदवचयन्। तद्ध तदुवाच स्वरेण चैव हिङ्कारेण चाऽऽगामेति ॥६॥ ११२८॥

द्वादशोऽनुवाके चतुर्थं खण्ड ।

अथ ह सत्याधिवाकश्चैत्ररथिस्सत्ययज्ञम्पौलुपितमुवाच प्राचीन-योगेति यम चेद्दै त्व साम विद्वान् साम्नाऽऽर्त्विज्य करिष्यसि नैव तर्हि पुनर्दीक्षामभिध्यातासीति । मुहुर्दीक्षी ह्यास ॥१॥ स होवाच यो वै साम्नश्श्रिय विद्वान्साम्नाऽऽर्त्विज्य करोति श्रीमानेव भवति । मनो वाव साम्नश्श्रीरिति ॥२॥ यो वै साम्नः प्रतिष्ठां विद्वान्साम्नाऽऽर्त्विज्य करोति प्रत्येव तिष्ठति । वाग्वाव साम्नः प्रतिष्ठेति ॥३॥

---

४-उपाद्-। ५-पुल् । ६-तार । ७ गल्नसम, गुल्विनसम। ८-त । ९ पर्णाभ्यां । १० च आगमे ॥

१ मच । २-क्षी । ३ आ ।

यो वै साम्नस्सुवर्णं विद्वान् साम्नाऽऽर्त्विज्यं करोत्यध्यस्य गृहे सुवर्णं गम्यते । प्राणो वाव साम्नस्सुवर्णमिति ॥४॥ यो वै साम्नोऽपचितिं विद्वान्साम्नाऽऽर्त्विज्यं करोत्यपचितिमानेव भवति । चक्षुर्वाव साम्नोऽपचितिरिति ॥५॥ यो वै साम्नश्श्रुतिं विद्वान्साम्नाऽऽर्त्विज्यं करोति श्रुतिमानेव भवति । श्रोत्रं वाव साम्नश्श्रुतिरिति ॥६॥ ११३६॥

द्वादशोऽनुवाके पञ्चमः खण्डः । द्वादशोऽनुवाकस्समाप्तः ।

---

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा[1] त्रीणि निहिता[2] नेऽङ्गयन्ति तुरीयं वाचो मनुष्या वदन्तीऽति ॥ १ ॥

वागेव साम । वाचा हि साम गायति । वागेवोऽक्थम्[4] । वाचा ह्युक्थं[4] शंसति । वागेव यजुः । वाचा[5] हि यजुरनुवर्तते ॥२॥ तद्यत्किंचार्वाचीनम्ब्रह्मणस्तद्वागेव सर्वम् । अथ यदन्यत्र ब्रह्मोपदिश्यते । नैव[6] हि तेनाऽऽर्त्विज्यं करोति । परोक्षेणैव तु[7] कृतम्भवति ॥३॥

४-द्दो ।

१-हानि । २-हितानी । ३ नास्ति । ४-क्-। ५ घाचं । ६ ने । ७ नास्ति ।

तस्या एतस्यै वाचो मनः पादश्चक्षुः पादश्श्रोत्रम्पादो वागेव चतुर्थः पादः ॥४॥ तद्यद्वै मनसा ध्यायति तद्वाचा वदति । यच्चक्षुषा पश्यति तद्वाचा वदति । यच्छ्रोत्रेण शृणोति[१०] तद्वाचा वदति ॥५॥ तद्यदेतत्सर्वं वाचमेवाऽभिसमयति[११] तस्माद्वागेव साम । स ह वै सामवित्स साम वेद य एवं वेद ॥६॥ तस्या एतस्यै वाचः प्राणा[१२] एवाऽमृः । एषु हीदं सर्वममृतेति[१३] ॥७॥ १।४०॥

त्रयोदशोऽनुवाके प्रथमः खण्डः ।

तेन[१] हैतेनाऽसुना देवा जीवन्ति[२] पितरो जीवन्ति मनुष्या जीवन्ति पशवो जीवन्ति गन्धर्वाप्सरसो जीवन्ति सर्वमिदं जीवति ॥१॥ तदाहुर्यदसुनेदं[३] सर्वं[४] जीवति कस्साम्नोऽसुरिति । प्राण इति ब्रूयात् । प्राणो ह वाव साम्नोऽसुः ॥२॥ स एष प्राणो वाचि प्रतिष्ठितो वाग्प्राणे प्रतिष्ठिता । तावेतावेवमन्योऽन्यस्मिन्प्रतिष्ठितौ । प्रतितिष्ठति[५] य एवं वेद ॥३॥ तदेतदृचाऽभ्यनूच्यते—

---

८ 'चतुर्थः' अधिक है । ९ स्वादु । १० शृणोति । ११ ऽहिसम-नि १२-णा । १३ 'असुते' के परे 'एषु हीदं सर्वं सुतेऽति' सब में लिखा है ( नास्ति 'ति ) ॥

१-न्तीऽति । २ यशा । ३ येने । ४ 'इदं' अधिक है । ५-ये । ६ मन्यस्-नि ७ प्रतिष्ठितः ।

अदितिर्द्यौरदितिरन्तरिक्ष[८]मदितिर्माता[९] स पिता स पुत्रः । विश्वे देवा[१०] अदितिः पञ्चजना अदिति-र्जातमदितिर्जनित्वम् ॥ इति ॥४॥

अदितिर्द्यौरदितिरन्तरिक्ष[८]मिति । एषा[११] वै द्यौरेषा[११]ऽन्तरिक्षम् ॥५॥ अदितिर्माता स पिता स पुत्र इति । एषा वै[१२] मातैषा पितैषा पुत्रः ॥६॥ विश्वेदेवा अदितिः पञ्चजना इति । येदेवा असुरेभ्यः पूर्वे पञ्चजना आसन् य एवासावादित्ये पुरुषो यश्चन्द्रमसि यो विद्युति योऽप्सु योऽयमक्ष[१३]ण्यन्तरेष एव ते । तदेषैव ॥७॥ अदिति-र्जातमदिति[१४]र्जनित्वमिति। एषा ह्येव जातमेषा जनित्वम् ॥८॥१,४१॥

अयोदशोऽनुवाके द्वितीयः खण्डः । त्रयोदशोऽनुवाकस्समाप्तः ।

---

आरुणिर्ह वासिष्ठं चैकितानेयम्ब्रह्मचर्यमुपेयाय । तं होवाचा-ऽजानासि[१] सौम्य गौतम यदिदं वयं[२] चैकितानेयास्सामैवोपास्महे[३] । कां त्वं देवतामुपास्स[४] इति । सामैव भगवन्त[५] इति होऽवाच ॥१॥ तं[६] ह पप्रच्छ यदग्नौ तद्वेत्थाऽ इति । ज्योतिर्वा एतदस्य साम्नो यद्रूपं

८–रीक्ष–। ९ नास्ति, अदितिर्माता..... अदितिरन्तरिक्षम् । १०–वँ । ११–षो । १२–वैद् । १३–यम् । १४ इतिद्, इति ॥

१ (वाचा) आज । २ यं । ३–आह–इति । ४–स्स नहीं । ५–वत । ६ ता ।

सामोऽपास्मह इति ॥२॥ यत्पृथिव्या तद्देत्या३ इति । प्रतिष्ठा वा एषा तस्य साम्नो यद्वय सामोपास्मह इति ॥३॥ यदप्सु तद्देत्या३ इति । शान्तिर्वा एषा तस्य साम्नो यद्वय सामोपास्मह इति ॥४॥ यदन्तरिक्षे तद्देत्या३ इति । आत्मा वा एष तस्य साम्नो यद्वय सामोपास्मह इति ॥५॥ यद्वायौ तद्देत्या३ इति । श्रीर्वा एषा तस्य साम्नो यद्वय सामोऽपास्मह इति ॥६॥ यद्दिक्षु तद्देत्या३ इति । व्याप्तिर्वा एषा तस्य साम्नो[10] यद्वय सामोपास्मह इति[11] ॥७॥ यद्दिवि तद्देत्या३ इति । विभूतिर्वा एषा[12] तस्य साम्नो यद् वय सामोपा-[12]स्मह इति ॥८॥ १।४२॥

चतुर्दशोऽनुवाके प्रथम खण्ड ।

यदादित्ये तद्देत्या३ इति । तेजो वा एतत्तस्य[1] साम्नो यद्वय सामोपास्मह इति ॥१॥ यच्चन्द्रमसि तद्देत्या३ इति । भा वा एषा[1] तस्य साम्नो यद्वय सामोपास्मह इति ॥२॥ यन्नक्षत्रेषु तद्देत्या३ इति । मह्ना[2] वा एषा तस्य[1] साम्नो यद्वय सामोपास्मह इति ॥३॥ यदन्ने तद्देत्या३ इति। रेतो वा एतत्तस्य[3] साम्नो[1] यद्वयसामोपास्मह

७ हाशिया पर लिखा है। ८ पतस्य । ६ नास्ति यद् इति ।
१० नास्ति साम्नो ऽप । ११–हा । १२ नास्ति ए स्मह ॥
१ नास्ति । २ अज्ञ । ३ नास्ति, 'ए तत्' में 'तत्' ।

इति ॥४॥ यत्[4]चक्षुषु तद्वेत्था३ इति । यशो वा एत[1]त्तस्य साम्नो यद्वय सामोपास्मह इति ॥५॥ यद्वाचि तद्वेत्था३ इति । स्तोमो[6] वा एष तस्य[1] साम्नो यद्वयं सामोपास्मह इति ॥६॥ यद्यजुषि तद्वेत्था३ इति । कर्म वा एतत्तस्य[1] साम्नो यद्वयं सामोपास्मह इति ॥७॥ अथ किं उपास्स[7] इति । अक्षरमिति । कतमत्तदक्षरमिति । यत्क्षरन्नाऽक्षीयते- ति । कतमत्तद्[8] क्षर[9]न्नाऽक्षीयतेति । इन्द्र इति ॥८॥ कतमस्स इन्द्र इति । योऽक्ष[10]ण्यमत[11] इति । कतमस्स[12] यो[13]ऽक्षत्रमत इति । इयं देवतेति होवाच ॥९॥ योऽय चक्षु[14]षि पुरुष एष इन्द्र एष प्रजापतिः । (स) समः पृथिव्या सम आकाशेन समो दिवा समस्सर्वेण भूतेन । एष परो दिवो दीप्यते[15] । एष एवेदं सर्वमित्युपासित[16]व्यः ॥१०॥ स य एवंवेद वेद ज्योतिष्मान् प्रतिष्ठावाञ्छ्रान्तिमानात्मवाञ्छ्रीमान् व्याप्तिमान् विभूतिमांस्तेजस्वी[17] भावान् प्रज्ञावाञ्चेतस्वी यशस्वी स्तोम[18]वान् कर्मवानक्षरवानिन्द्रियवान् सामन्वीभवति ॥११॥ तद्वै[19]- तदृचाऽभ्यनूच्यते ॥१२॥ १।८३॥

चतुर्दशमेऽनुवाके द्वितीय खण्ड ।

---

४ नास्ति । ५ वो । ६ स्ते- । ७ 'स्स' के लिये स्थान छोड़ा है । ८-द् । ९ अक्षरँ । १०-च । ११ इन्द्रमत । १२ सो । १३ नास्ति । १४-ई । १५ दिव्य- । १६-सीतव्य । १७-वी । १८ स्तोमान् । १९ उद् ॥

**रूपं-रूपम्प्रति रूपोबभूव तदस्य रूपम्प्रतिचक्षणाय। इन्द्रोमायाभिःपुरुरूप[1] ईयते[2] युक्ता ह्यस्य हरयश्शतादश॥**

इति ॥१॥ रूपं-रूपम्प्रतिरूपो बभूवेति । रूपं-रूपं ह्येप प्रतिरूपो बभूव ॥२॥ तदस्य रूपम्प्रतिचक्षणायेति । प्रतिचक्षणाय[3] ह्यस्यैतद्रूपम् ॥३॥ इन्द्रो मायाभिः पुरुरूप[4] ईयत[5] इति । मायाभिर्ह्येप एतत्पुरु रूप[5] ईयते[6] ॥४॥ युक्ता ह्यस्य हरयश्शता[7] दशेति । सहस्रं हैत आदित्यस्य रश्मयः । तेऽस्य युक्तास्तैरिदं सर्वं हरति । तद्यदेतैरिदं सर्वं हरति तस्माद्धरयः ॥५॥ रूपं[8] रूपम्मघवा बोभवीति

**मायाः कृण्वानः परितन्वं स्वाम् । त्रिर्यद्दिवः परि मुहूर्तमागात्[9] स्वैर्मन्त्रैरनृतुपा ऋतावेति ॥६॥**

रूपं-रूपम्मघवा बोभवीतीति[10] । रूपं-रूपं[11] ह्येप मघवा बोभवीति ॥७॥ मायाः कृण्वानः[12] परि-तन्वं स्वामिति । मायाभि[13]र्ह्ये[14]प एत[15]त्स्वां तनुं गोपायति ॥८॥ त्रिर्यद्दिवः परिमुहूर्तमागादिति[16] । त्रिर्ह वा एप एतस्य मुहूर्तस्येमाम्पृथिवीं समन्तः पर्येतीमाः प्रजास्संचक्षाणः ॥९॥ स्वैर्मन्त्रैरनृतुपा[17] ऋतावेति । अनृतुपा ह्येष एतदृतावा[18] ॥१०॥३।४४

चतुर्दशोऽनुवाके तृतीय खण्डः।

---

१ पुरुर ह्रंप, पुरुरूपं । २ रस्यते । ३—ह्या । ४—पम । ५—पम । ६ रमीयते । ७ नास्ति, हरयश्······तेऽस्य । ८ 'म' अधिक है । ९ मुर्ह्—। १० नास्ति, इति । ११ पुनः लिखा है 'रूपंरूपं······वीवीप्रति (!) । १२ कृण्वा । १३—भि । १४ रा । १५ नास्ति । १६ यति । १७ नृत—। १८ त्राना ॥

तद्ध पृथुर्वैन्यो दिव्यान्व्रात्यानपप्रच्छ—

इन्द्रमुक्थमृचमुद्गीथमाहुर्ब्रह्म साम प्राणं व्यानम् ।
मनो वा चक्षुरपानमाहुश्श्रोत्रं श्रोत्रिया बहुधावदन्तीति ॥१॥ ते मत्यूचुः—

ऋषय एते मन्त्रकृत पुराजा पुनराजायन्ते वेदानां गुप्त्यैकम् ।
ते वै विद्वांसो वैन्य तद्वदन्ति समानम्पुरुषम्बहुधा निविष्टम्, इति ॥२॥

इमां ह वा तद्देवतां त्रय्यां विद्यायामिमां समानामभ्येक आपयन्ति नैके । यो ह वा एतदेवं वेद स एवैतां देवतां सम्प्रति वेद ॥३॥ स एष इन्द्र उद्गीथः । स यदैष इन्द्र उद्गीथ आगच्छति नैवोद्गातुर्थोपगातॄणां च विज्ञायते । इत एवोऽऽर्ध्वस्स्वरुदेति । स उपरि मूर्ध्नो लेलायति ॥४॥ स विद्यादगमदिन्द्रो नेह कश्चन पाप्मा न्यङ्गः परिशेक्ष्यत इति । तस्मिन् ह न कश्चन पाप्मा न्यङ्गः परिशिष्यते ॥५॥ तदेतदभ्रातृव्यं साम । न ह वा इन्द्रः कंचन भ्रातृव्यम्पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यम्पश्यत एवमेव न कंचन भ्रातृव्यम्पश्यते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥६॥२।४५॥

चतुर्थेऽनुवाके चतुर्थ [illegible] । चतुर्थोऽनुवाकस्समाप्तः ।

---

१–इदम । २ नो । ३ अर्थ्या, ह[illegible]र्या । ४ ईमां । ५–ना । ६ भ्य् । ७ हवे । ८ य दे । ९–इन्द्र– । १० 'ति' अधिकम् रो । ११ ध्वो । १२ स्वर । १३ परिपे– ।

प्रजापतिर्वा वेद अग्र आसीत् । सोऽकामयत बहुस्स्यांप्रजायेय भूमानं गच्छेयमिति ॥१॥ स षोडशधाऽऽत्मानं व्यकुरुत भद्रं च समाप्तिश्चाऽऽभूतिश्च[1] सम्भूतिश्च भूतं च सर्वं च रूपं चाऽपरिमितं च श्रीश्च यशश्च नाम चाऽग्रं च सजाताश्च पयश्च महीया[2] च रसश्च ॥२॥ तद्यद्भद्रं हृदयमस्य तत् । ततस्संवत्सरमसृजत । तदस्य संवत्सरोऽनूपतिष्ठते[3] ॥३॥ समाप्तिः कर्मास्य तत् । कर्मणा हि समाप्नोति । तत ऋतूनसृजत । तदस्यर्तवोऽनूपतिष्ठन्ते ॥४॥ आभूतिरन्नमस्य[4] तत्[5] । ( तत् ) चतुर्धा[6] भवति । ततो मासानर्धमासानहोरात्राण्युपसोऽसृजत । तदस्य मासा अर्धमासा अहोरात्राण्युषसो[7]ऽनूपतिष्ठन्ते ॥५॥ सम्भूतौ रेतोऽस्य तत् । रेतसो हि सम्भवति ॥६॥ ११४६॥

पञ्चदशोऽनुवाके प्रथम खण्ड ।

ततश्चन्द्रमसमसृजत । तदस्य चन्द्रमा अनूपतिष्ठते । तस्मात्स रेतसः प्रतिरूपः ॥१॥ भूतम्प्राणो[1]ऽस्य सः[2] । ततो वायुमसृजत । तदस्य वायुरनूपतिष्ठते ॥२॥ सर्वमपानोऽस्य सः । ततः पशूनसृजत । तदस्य पशवो[3]ऽनूपतिष्ठन्ते ॥३॥ रूपं व्यानोऽस्य सः । ततः प्रजा

---

१ चे । २–यो । ३–मन्ते । ४ 'त' अधिक है । ५ तद् । नास्ति । ६ चर्चा, अर्धा । ७–ति,–ता, त ।

१–स । २–शा । ३ कपशवो ।

असृजत। तदस्य प्रजा अनूपतिष्ठन्ते । तस्मादासु प्रजासु रूपाण्य-धिगम्यन्ते[4] ॥४॥ अपरिमितम्मनोऽस्य तत्[5] । ततो दिशोऽसृजत । तदस्य दिशोऽनूपतिष्ठन्ते। तस्मात्ता अपरिमिताः। अपरिमितामिव हि मनः ॥५॥ श्रीर्योगस्य सा । ततस्समुद्रमसृजत । तदस्य समुद्रो-ऽनूपतिष्ठते ॥६॥ यजस्तपोऽस्य तत् । ततोऽग्निमसृजत । तद[6]स्या[7]-ऽग्निरनूपतिष्ठते । तस्मात्स मथिता[8]दिव सन्तप्तादिव जायते ॥७॥ नाम चक्षुरस्य तत् ॥८॥ १।४७॥

पञ्चदशेऽनुवाके द्वितीयः खण्डः ।

तत आदित्यमसृजत । तदस्यादित्योऽनूपतिष्ठते ॥१॥ अग्र-म्मूर्धास्य सः । ततो दिवमसृजत । तदस्य द्यौरनूपतिष्ठते ॥२॥ सजाता अङ्गान्यस्य[1] तानि[2] । अङ्गैर्हि[3] सह जायते । ततो वनस्पती-नसृजत । तदस्य वनस्पतयोऽनूपतिष्ठन्ते ॥३॥ पयो[4] लोमान्यस्य तानि। तत ओषधीरसृजत।तदस्यौषधयोऽनूपतिष्ठन्ते ॥४॥ महीया[5]-माँसान्यस्य तानि । माँसैर्हि सह[6] महीयते । ततो वयाँस्यसृजत । तदस्य वयाँस्यनूपतिष्ठन्ते। तस्मात्तानि प्रपतिष्णूनि।प्रपतिष्णूनी-

---

४–यते । ५ नास्ति, ततो ......... तस्मात् । ६ नास्ति। ७ तस्या। ८ मथितामिव, मथिताद् ॥

१ अंगान्य, अंगहान्य, अङ्गह्य् । २ ता । ३ गैह् । ४ नास्ति, पयो ......... अनूपतिष्ठन्ते । ५ ममिया, महिया । ६ त ।

ञ्च महामाँसानि[7] ॥५॥ रसो मज्जाऽस्य[8] सः । ततः पृथिवीमसृजत । तदस्य पृथिव्यनूपतिष्ठते[9] ॥६॥ स हैवं षोडशधाऽऽत्मानं विकृत्य सार्धं समैत् । तद्यत्सार्धं समेतत्[10] तत्साम्नस्सामत्वम् ॥७॥ स एवैष हिरण्मयः पुरुष उदतिष्ठत्प्रजानां जनिता[11] ॥८॥ १४८॥

पञ्चदशोऽनुवाके तृतीयः खण्डः ।

देवासुरा अस्पर्धन्त । ते देवाः प्रजापतिमुपाधावाञ्जयामाऽसुरानिति ॥१॥ सोऽब्रवीन्न वै मां यूयं वित्थ[1] नाऽसुराः । यद्वै मां यूयं वियात[2] ततो वै यूयमेव स्यात, पराऽसुराभवेयुरिति ॥२॥ तद्वै ब्रूही[3]त्यब्रुवन । सोऽब्रवीत्पुरुषः प्रजापतिस्सामेति मोऽपाद्ध्वम् । ततो वै यूयमेव भविष्यथ पराऽसुरा भविष्यन्तीति ॥३॥ तम्पुरुषः प्रजापतिस्सामेत्युपासत । ततो वै देवा अभवन् पराऽसुराः । स यो हैवं विद्वान्पुरुषः प्रजापतिस्सामेत्युपास्ते भवत्यात्मना पराऽस्य द्विषन् भ्रातृव्यो भवति ॥४॥ १४९॥

पञ्चदशोऽनुवाके चतुर्थः खण्डः । पञ्चदशोऽनुवाकस्समाप्तः ।

———०:———

७ महीमन ८ मज्ज्या । ९–न्ते । १० समैत: सत्यव्रात, 'तद्यत्सार्धं समैतत्' (!) पुन: हि । ११ जयिता ॥

१ यस्य । २–येत । ३–हिं ॥

देवा वै निजिग्याना[1] अब्रुवन्द्वितीयं करवामहै । माऽद्वितीया भूमेति । तेऽब्रुवन सामैव[2] द्वितीयं करवामहै । सामैव नो द्वितीय-मस्त्विति ॥१॥ त इमे द्यावापृथिवी अब्रुवन् समेतं साम मजनयत-मिति ॥२॥ सो[3]ऽसावस्या अबीभत्सत[4] । सो[3]ऽब्रवीद्वह्व वा एतस्यां किं च किं च कुर्वन्त्यभिष्ठीवन्त्य[5]भिचरन्त्यभ्यासते । पुनीतन्वेनामपूता वा इति ॥३॥ ते गाथामब्रुवन्त्वया पुनामेति । किं ततस्स्यादिति । शतसनि[6]स्स्या इति । तथेति । ते गाथयाऽपुनन् । तस्मादुत गाथया शतं सुनोति ॥४॥ ते कुम्ब्यामब्रुवन् त्वया पुनामेति । किं तत-



स्स्यादिति । शतसनिस्स्या इति । तथेति । ते कुम्ब्यया[7]-ऽपुनन् । तस्मादुत कुम्ब्यया[8] शतं सुनोति[8] ॥५॥ ते नाराशँसीमब्रु-[9]वन् त्वया पुनामेति । किं ततस्स्यादिति । शतसनिस्स्या[10] इति । तथेति । ते नाराशँस्याऽपुनन् । तस्मादुत नाराशँस्या शतं सुनोति ॥६॥ ते रैभीम[11]ब्रुवन् त्वया पुनामेति । किं ततस्स्या[12]दिति । शतस-निस्स्या[10] इति । तथेति । ते रैभ्याऽपुनन् । तस्मादुत रैभ्या शतं

---

१- षिजिग्राना । २ वा । ३ सा । ४ ध्यबीद्दत-। ५-ष्ठिय्-। ६-नि,-नी । ७-म्य्-। ८ '५' पुन. । लिखा है । ६ तेन । १० शतनी । ११-भिम । १२ त ॥

वीदुग्र[13] साम्नो वृणे श्रियमिति[14]। स[15] य एतद्गायाच्छ्रीमानेव[16] सोऽस-न्मामु स देवानामृच्छाय एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥८॥ अथ सोममब्रवीत्त्वमनुवृणीष्वेति ॥९॥ सोऽब्रवीद्वल्गु[15] साम्नो वृणे श्रियमिति । स य एतद्गायाच्छ्रिय एव स कीर्तेः श्रियश्चलुपः श्रियस्सर्वेषामसन् मामु स देवानामृच्छाय एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥१०॥ अथ बृहस्पतिमब्रवीत्त्वमनुवृणीष्वेति[17][18] ॥११॥ सोऽब्रवीत्क्रौञ्चं साम्नो वृणे ब्रह्मवर्चसमिति । स य एतद्गायाद्ब्रह्मवर्चस्येव सोऽसन्मामु स देवानामृच्छाय एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥१२॥ ३।५।१॥

षोडशोऽनुवाके द्वितीय खण्ड ।

अथ विश्वान्देवानब्रवीद्यूयमनुवृणीध्वमिति ॥१॥ तेऽब्रुवन्नैभ्र-देवं साम्नो वृणीमहे भजनमिति । स य एतद्गायात्थ[1] मावानेव[2] सोऽस-दस्मानु देवानामृच्छाय एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥२॥ अथ पशूनब्रवीद्यूयमनुवृणीध्वमिति ॥३॥ तेऽब्रुवन्वायुर्वा अस्माक-मीशे । स एव नो वरिष्यत[3] इति । ते वायुश्च पशवश्चाब्रुवन्निरुक्तं[4] साम्नो

---

१३ वल्गु । १४ प्रियम । १५ नास्ति, स य ' 'सोऽब्रवीद् ९ में । १६ गायच्च । १७ नास्ति । १८ वृष्ट-।

१ 'म' अधिक है । २ नीचे से 'च स वायु' अधिक देता है । ३ वरिष्य । ४ अनिर-।

वृणीमहे पशव्यमिति। स य एतद्गायात्पशुमानेव सोऽसदस्मासु च
स वायुं[5] च देवानामृच्छाय[6] एवं विद्वाँसमेतद्गायन्तमुपवदादिति॥४॥
अथ प्रजापतिरब्रवीदहमनुवरिष्य इति[7] ॥५॥ सोऽब्रवीदनिरुक्तं
साम्नो वृणे स्वर्ग्यमिति[8]। स य एतद्गायात्स्वर्गलोक एव सोऽसन्मासु[9]
स देवानामृच्छाय[6] एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥६॥
अथ वरुणमब्रवीत्त्वमनुवृणीष्वेति ॥७॥ सोऽब्रवीद्यद्वो न कश्चना-
ऽवृत तदहम्परिहरिष्य[10] इति। किमिति। अपध्वान्तं[11] साम्नो वृणेऽपश-
व्यमिति। स य एतद्गायादपशु[12]रेव सोऽसन्मासु स देवानामृच्छाय[13]
एतद्गायादिति ॥८॥ तानि वा एतान्यष्टौ गीतागीतानि साम्नः।
इमान्यु ह वै सप्तगीतानि। अथेयमेव[14] वारुण्यागाऽगीता ॥९॥ स
यां ह कां[15] चैवं विद्वानेतासां सप्तानामागानां गायति गीतमेवास्य
भवत्येतानु कामा[16]नाप्नोति[17] य एतासु कामाः। अथेमामेव वारुणी-
मागां न गायेत् ॥१०॥ ।५२॥

षोडशोऽनुवाके तृतीयः खण्डः। षोडशोऽनुवाकस्समाप्तः।

——:०——

५-युष्। ६ 'इति' तक शेष नहीं लिखा। ७ ति। ८ स्वर्गम्। ९ समुत्। १०-हम्प्-य-, यत। ११ अपद्ध्मातम्, अपध्मातम्। १२ पशु-। १३ ऋच्छाद्। १४-थ, रथ। १५-न्द्। १६ कामा। १७ नीरभ-, निर्भ्नोति॥

द्वयं वावेदमग्र आसीत्सच्चैवासच्च ॥१॥ तयोर्यत् सत् तत्साम तन्मनस्स प्राणः। अथ यदसत्तदृक्[1] सा वाक् सोऽपानः ॥२॥ तद्यन्मनश्च प्राणश्च तत्समानम्। अथ या वाक् चापानश्च तत्समानम्। इदमायतनम्मनश्च प्राणश्चेदमायतनं[2] वाक् चापानश्च। तस्मात्पुमान्दाक्षिणतो योषामुपशेते[3] ॥३॥ सेयमृगस्मिन् साम्नि[4] मिथुनमैच्छत। तामपृच्छत् का त्वमसीति। साऽहमस्मीत्यब्रवीत्। अथ या अहममोऽस्मीति ॥४॥ तद्यत्सा चाऽमश्चतत् सामाऽभवत् तत्साम्नस्सामत्वम् ॥५॥ तौ वै सम्भवावेति। नेत्यब्रवीत्स्वसा वै मम त्वमस्यन्यत्र मिथुनमिच्छस्वेति॥६॥साऽब्रवीन्न वै तं विन्दामि येन सम्भवेयम्[5]। त्वयैव सम्भवानीति। सा वै पुनीष्वेत्यब्रवीत्। अपूता[6] वा असीति ॥७॥ साऽपुनीत यदिदं विप्रा[7] वदन्ति तेन। साऽब्रवीत्त्वैदम्भविष्यतीति।भत्यूहेत्यब्रवीत्।धीरा[8] एषा।प्रजानां जीवनं वा एतद्भविष्यतीति। तथेति। तत्प्रत्योहत। तस्मादेषाधीरेव प्रजानां जीवनमेव ॥८॥ पुनीष्वेत्यब्रवीत्। साऽपुनीत गाथया साऽपुनीत कुम्भ्यया[9][10] साऽपुनीत नाराशंस्या साऽपुनीत पुराणेति-

१ म्यक–भस्म्यदच अचितेऽसि, (भस्म्य) अचितेति। २–ना। ३ उपयशेते। ४–म। ५ सम्भयेत्। यम। ६ 'वा' अधिक है। ७ प्रा, रिप्रा। ८ त्वे। ९ त्यत्। १०–म्भ–, 'या' अधिक है।

ह्यसेम साऽपुनीत यदिदम्[11] आदाय[12] नाऽऽगायन्ति तेन ॥९॥ साऽब्रवीत्किंदम्भविष्यतीति । मत्पृष्ठेत्यब्रवीत् । श्रीर्वा एषा । प्रजाना जीवन वा एतद्भविष्यतीति । तथेति । तत्पत्यौहत् । तस्मादेषा श्रीर्वै प्रजाना जीवनम्वेव ॥१०॥ पुनीष्वैवेत्यब्रवीत् ॥११॥१॥१३॥

सप्तदशोऽनुवाक प्रथम खण्ड ।

सा मधुनाऽपुनीत[1] । तस्मादुत ब्रह्मचारी मधु नाऽश्नीयाद्वेदस्य पलाव[2] इति । काम ह त्वाचार्यदत्तमश्नीयात् ॥१॥ अथर्क नामाब्रवीद्बहु वै किं च किं च पुमाँश्चरति । त्वमनुपुनीष्वेति । स भरण्डकेष्वेणाऽपुनीत[3] । पूतानि ह वा अस्य सामानि पूता ऋचः पूतानि यजूँषि पूतमनूक्तम्पूत सर्वम्भवति य एव वेद ॥२॥ ताभ्या सदो मिथुनाय पर्यश्रयन्[4] । तस्मादुपवसथीया[5] रात्रिं सदसि न शयीत[6] । अत्र ह्येतावस्साम[7] उपवसथीया[8] रात्रिं सदसि सम्भवतः । स यथा श्रेय स उपद्रष्ट्र हि शश्वदीश्वरोऽनुलग्न[9]ः पराभवितोः[10] ॥३॥ अथो आहुरुद्गातुर्मुखे सम्भवतः । उद्गातुरेव मुख नेदे-[11]

---

११ इमम् । १२ मादायना, माऽऽदायना ॥

१ सारे पद का पुनर्लेख है । २ स 'कामम्' के स्थान में । मा सर्वत्र है । ३ हरण्डकेष्वेणा भरण्ड, भरण्डक'श्वेणा । ४-यन् । ५-थीयाम,-थीयाम । ६-ई । ७ यीत, येत । ८-ष्ट-। ९, सदू । १० नुलुब्ध, पनुलुब्ध-।

वेति ॥४॥ तदु वा आहुः काममेवोद्गातुर्मुखमीक्षेत । उपवसथीयामे-[12] वैतां रात्रिं सदसि न शयीत । अत्र ध्वैनाहवमामे उपवस्थीयां . रात्रिं सदसि सम्भवत इति ॥५॥ तां सम्भविष्यन्नाहाऽमोऽहम-[10] स्मि सा त्वं सा त्वमस्यमोऽहम् । सा मामनुव्रता भूत्वा प्रजाः प्रज-[18] नयावहै । एहि सम्भवावहा इति ॥६॥ तां सम्भवन्नत्यरिच्यत[15][16] सोऽब्रवीन्न वै त्वाऽनुभवामि । विराड् भूत्वा प्रजनयावेति । तथेति ॥७॥ तौ विराड्भूत्वा प्राजनयताम् । हिङ्कारश्चाऽऽहावश्च[17] प्रस्तावश्च प्रथमा चोद्गीथश्च मध्यमा च प्रतिहारश्चोत्तमा च निधनं च वषट्कारश्चैवं[18] विराड् भूत्वा प्राजनयताम्[19] । ते अमुमजनयतां योऽसौ तपति । ते व्यद्रवताम्[20] ॥८॥ १।५४॥

सप्तदशोऽनुवाके द्वितीयः खण्डः ।

मद्व्यभू३न्मदव्यभू३दिति । तस्मादाहुर्मधुपुम[1] इवि ॥१॥ तस्मादुतस्त्रियो मधु नाऽश्नन्ति पुत्राणामिदं व्रतं चराम इति वदन्तीः ॥२॥ तदयं तृचोऽनूदश्रयत । इयमेव[2] गायत्र्यन्तरिक्षं[3] त्रिष्टुबसौ जगती । तस्यैतत्तृचः ॥३॥ स उपरिष्टात्सामाऽभ्याहितं तपति ।

---

११ न । १२–थी– । १३ 'रत्न' अधिक है । १४–प्र– । १५ संभवत । १६ भ्रात्यरिच्यते । १७ हिं– । १८ च । एवम् । १९ प्रंज्– । २० व्यद्दप्ताम्, व्यद्दधताम्, व्यदपताम् (?) ॥

१–म्रा । २ इदम् । ३–र्दंष्–

सोऽश्नुत इवासीदन्नेल्लायदिव । स नोर्ध्वोऽतपत् ॥४॥ स देवा-नब्रवीदुन्मा गायतेति । किं ततस्स्यादिति । श्रियं वः प्रयच्छेयम् । मामिह र्हहेतेति ॥५॥ तथेति । तमुदगायन् । तमेतदत्राऽऽर्हहन् । तेभ्यश्श्रियम्प्रायच्छत् । सैषा देवानां श्रीः ॥६॥ तत एतदूर्ध्वस्तपति । स नार्वाङतपत् ॥७॥ स ऋषीनब्रवीदनु मा गायतेति । किं ततस्स्यादिति । श्रियं वः प्रयच्छेयम् । मामिहर्हहेतेति ॥८॥ तथेति । तमन्वगायन् । तमेतदत्रार्हहन् । तेभ्यश्श्रियम्प्रायच्छत् । सैषा ऋषीणां श्रीः ॥९॥ तत एतदर्वाङ् तपति । स न तिर्यङ् प्रतपत् ॥१०॥ स गन्धर्वाप्सरसोऽब्रवीदामा गायतेति । किं ततस्स्यादिति । श्रियं वः प्रयच्छेयम् । मामिहर्हहेतेति ॥११॥ तथेति । तमागायन् । तमेतदत्राऽऽर्हहन् । तेभ्यश्श्रियम्प्रायच्छत् । सैषा गन्धर्वाप्सरसां श्रीः ॥१२॥ तत एतत् तिर्यङ् तपति ॥१३॥ तानि वा एतानि त्रीणि साम्न उद्गीतमनुगीतमागीतम् । तद्यथेदं वयमागायोद्गायाम एतदुद्गीतम् । अथ यद्यथागीतं तदनुगीतम् । अथ यत्किंचेति साम्नस्तदागीतम् । एतानि ह्येव त्रीणि साम्नः ॥१४॥ ॥५५॥

सप्तदशोऽनुवाके तृतीयः खण्डः । सप्तदशोऽनुवाकस्समाप्तः ।

:o:

४ स्त्-,ध्-। ५ हुंहेते। ६ उदगात्। ७-हत्। ८ तप्-। ९ तिर्य्यंङ्। १० त । ११ तिर्यंङ् । १२ आगयां, आगेयो-। १३-यम ॥

आपो वा इदमग्रे महत्सलिलमासीव्। स ऊर्मिरूर्मिमस्कन्दत्[1]। ततो हिरण्मयौ कुदर्या[2] समभवतां ते एवर्[3]क्सामे[4] ॥१॥ सेयमृगिदं सामाऽभ्यप्लवत[5]। तामपृच्छत का त्वमसीति। साहमस्मीत्यब्रवीत्। अथ वा अहममोऽस्मीति। तद्यत्सा चाऽमश्च तत्साम्नस्सामत्वम्॥२॥ तौ वै सम्भवावेति। नेत्यब्रवीत्स्वसा वै मम त्वमसि। अन्यत्र मिथुनमिच्छस्वेति॥३॥ सा पराप्लवत[6] मिथुनमिच्छमाना। सा समास्सहस्रं सप्ततीः पर्यप्लवत॥४॥ तदेष श्लोकः—

> त्री रैत्राऽग्रे सचरती[7]च्छन्ती[8] सलिले पतिम्।
> समास्सहस्र सप्तती स्ततोऽजायत पश्यत, इति॥५॥

असौ वा आदित्यः पश्यतः[9]। एष एव तदजायत[10]। एतेन हि पश्यति॥६॥ साऽवित्त्वा[11]न्यप्लवत। साऽब्रवीन्न[12] वै तं विन्दामि येन सम्भवेयम्। त्वयैव सम्भवानीति॥७॥ सा वै द्वितीयामिच्छस्वेत्यब्रवीन्न वै मैकोऽयंस्यसीति। सा द्वितीयां[13] विस्वा[14] न्यप्लवत॥८॥ (तृतीयाम्) इच्छस्वैवेत्यब्रवीन्नो[14] वाव[15] मा[16] द्वे[17] उद्यंस्यथ इति। सा तृतीयां[13] विस्वा न्यप्लवत। सोऽब्रवीदत्र[17] वै मोऽयंस्यथेति[18]

---

१—द। २ कुदर्यौ। ३ येप। ४ कैसा—। ५ ह्यप्लु—। ६ पपरा—। ७ सप्ती। ८—ति। ९ पदयः। १० तम। ११ पित्वा। १२ नास्ति सा·········न्यप्लवत। १३—यॅम। १४ धे। १५ वा। १६ स्थान छोड़ा हुआ है, ध्वे। १७ अब्र्— १८—स्यथी।

॥६॥ स यदेकयाग्रे समवदत तस्मादेकर्चे साम । अथ यद्वे अपासेधत्तस्माद्द्वयोर्न कुर्वन्ति । अथ यत् तिसृभिस्समपादयत् तस्मादु तृचे साम॥१०॥ ता अब्रवीत्पुनीध्वं न पूता वै स्येति॥११॥ १.१५६॥

अष्टादशोऽनुवाके प्रथमः खण्डः ।

सा गायत्री गाथयाऽपुनीत नाराशंस्यानिष्टुब्रैभ्या जगती । भीमम्नत मन्नमपावाधिपतेति । तस्माद्भीमलानियो वा एताः। धियो वा इमा मन्नमपावाधिपतेति । तस्मादु भीमलाः । तस्मादु गायतीं नाऽश्नीयात् । अन्नेन ह्येते जीवन्ति ॥१॥ अथर्कं सामाऽब्रवीद्वद्वै किं च किं च पुमाँश्चराति । त्वमनुपुनीष्वेति । स ऊर्ध्वगणेनाऽपुनीत ॥२॥ पूतानि ह वा अस्य सामानि पूता ऋचः पूतानि यजूंषि पूतमनूक्तम्पूतं सर्वम्भराति य एवं वेद ॥३॥ ताभ्यां दिशो मिथुनाय पर्यैहन् । तां सम्यामिष्यसहयताऽमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहमिति ॥४॥ तामेतदुभयतो वाचाऽत्यरिच्यन हिङ्कारेण पुरस्तात्स्तोभेन मध्यतो निधनेनोपरिष्टात् । अतितिस्रो ब्राह्मणायनीस्सदृशी रिच्यते य एवं वेद ॥५॥ तयोर्यस्सम्भवतो-

१९-पद्-। २० तिस्र-। २१ सम्प्-॥

१-स्यांत् । २ य । ३-थे । ४-सा । ५ ऽश्नी-। ६ र्कं । ७-तानी । ८-ता । ९ नूक्-। १०-ष्यन्थ् । ११ अपचयन, अहयन्त । १२ साम १३-र्ध । १४ स्यरूच्यते ।

स्वैस्तृपो[15]ऽद्रवत (प्राणास्) ते। ते प्राणा एवोर्ध्वा अद्रवन्[16]॥६॥ सोऽसावादित्यस्स एष एव उदग्निरेव गी। चन्द्रमा एव थम्। सामान्येव उद्दच एव गी यजूंष्येव थमित्यधिदेवतम्॥७॥ अथा-ऽध्यात्मम्[17]। प्राण एव उद्वागेव गी मन एव थम्। स एषोऽधिदेवतं चाऽध्यात्मं चोद्गीथः[18]॥८॥ स य एवमेतदधिदेवतं चाऽध्यात्मं चोद्गीथं वेदैतेन हास्य सर्वेणोद्गीत[19]म्भवसे[20]तस्मादु एव सर्वस्मादा-वृश्च्यते य एवं विद्वाँसमुपवदति॥९॥ १।५७॥

अथाष्टमोऽनुवाके द्वितीय खण्ड।

तद्यदिदमाहुः क उदगासीरिति क एतमादित्यमगासीरिति[1] ह वा एतत्पृच्छन्ति[2]॥१॥ एतं ह वा एतं त्रय्या[3] विद्यया गायन्ति। यथा वीणागाथिनो[4] गापयेयुरेवम्॥२॥ स एष ह्रदः[5] कामानाम्पूर्णो यन्मनः। तस्यैषा कुल्या[6] यद्वाक्[7][8]॥३॥ तद्यथा[9] वा अपो[10] ह्रदात्कु-ल्ययोऽपरामुपनयन्त्ये[11]वमेवैतन्मनसोऽधि वाचोद्गाता यजमानम्[12] अस्य कामान् प्रयच्छति॥४॥ स य उद्गातारं दक्षिणाभि[13]राराधयति[14]

---

१५ चुं-। १६ द्र-। १७ ऽद्धा-। १८ गीथ्-। १९-गीय्-। २० भवत्येति, भवन्ति॥

१-सी। २ प्रच्छॅन्त्य्। ३ त्रय्या। ४-गाथिनो, गायत्-। ५ ह्रद्-। ६ कुल्-। ७ यत्। ८ वाक्। ९-त्र। १० अदो। ११-यॅन्त्य,-यन्ते, -यन्त्य्। १२-मा। १३ दक्षिणोभि। १४ राध्-।

तं सा कुल्यो[६]ऽपधावति । य उ एनं नाऽऽराधयति स उ तामपि-हन्ति ॥५॥ अथ वा अतः[१५] मक्तिश्चैव[१६] प्रतिग्रहश्च । तद्भूमिमिति[१७] वै प्रदीयते । तद्वाचा यजमानाय प्रदेयम्मनसाऽऽत्मने[१८] । तथा ह सर्वं न प्रयच्छति ॥६॥ तद्यदिदं सम्भवतो रेतोऽसिन्यत[१९] तदशयत[२०] । यथा हिरण्यमविकृतं[२१] लेलायदेवम् ॥७॥ तस्य सर्वे देवा ममत्विन आसन्मम ममेति । तेऽब्रुवन्नीदं करवामहा इति । तेऽब्रुवञ्छ्रयो[२२] वा इदमस्मत् । आत्मभिरेवैनद्विकरवामहा इति ॥८॥ तदात्मभिरेव व्यकुर्वत । तेषां वायुरेव हिङ्कार आसाऽग्निः प्रस्ताव इन्द्र आदि-स्सोमबृहस्पती[२३] उद्गीथोऽश्विनौ प्रतिहारो विश्वे देवा उपद्रवः प्रजापतिरेव निधनम् ॥९॥ एता वै सर्वा देवता एतत् हिरण्यम्[२४] । अस्य सर्वाभिर्देवताभिस्स्तुतम्भवति य एवं वेद । एताभ्य उ एव स सर्वाभ्यो देवताभ्य आवृश्च्यते य एवं विद्वांसमुपवदति ॥१०॥ ११५८॥

अष्टादशोऽनुवाके तृतीयः खण्ड ।

अथ ह प्रह्लाद[१]श्चैकितानेयः कुरुजगामाऽभिप्रतारिणं[२] काक्ष-सेनिम् । स हाऽस्मै मधुपर्कं ययाच ॥१॥ अथ हास्य वै प्रपद्य[३] पुरो-

---

. १५ अथ । १६ प्रतिग्र । १७ धुं- । १८ आत्- । १९ सिच्य- । २० दश्- । २१ अपि-,अपितृनं । २२ या । २३ सोमाबृ-ह । २४ हिरण्य् ॥

१ कु-, भारत् । २ क में यहां हि समाप्ति है । ३-य ।

हितोऽन्ते निपसाद शौनकः । त हाऽनामन्त्र्य[४] मधुपर्कम्पपौ ॥२॥ स होवाच किं विद्वान्नो दाल्भ्याऽनामन्त्र्य मधुपर्कम्पिबसीति । सामैर्यम्प्रपद्येति[५] होवाच ॥३॥ त ह तत्रैव[६] पप्रच्छ यद्वा यौ तद्वेत्था३इति । हिङ्कारो वा अस्य स इति ॥४॥ यदग्नौ तद्वेत्था३-इति । प्रस्तावो वा अस्य स इति ॥५॥ यदिन्द्रे तद्वेत्था३इति । आदिर्वा अस्य स इति ॥६॥ यत्सोमबृहस्पत्योस्तद्वेत्था३इति[७] । उद्-गीथो वा अस्य स इति ॥७॥ यदश्विनोस्तद्वेत्था३इति । प्रतिहारो वा अस्य स इति ॥८॥ यद्विश्वेषु देवेषु[८] तद्वेत्था३इति[९] । उपद्रवो वा अस्य स इति ॥९॥ यत्प्रजापतौ तद्वेत्था३इति । निधनं वा अस्य तदिति होवाच । आर्षेयं वा अस्य तद्बन्धुता वा अस्य[१०] सेति ॥१०॥ स होवाच नमस्तेऽस्तु भगवो विद्वानपा मधुपर्कमिति ॥११॥ अथ हैनरः पप्रच्छ किं देवस[११] सामैर्यम्प्रपद्योति[१२] । यद्देवसासु स्तुवत इति होवाच तद्देवसामिति ॥१२॥ तदेतद साम्नैव मत्युक्तम्[१३] । व्याक्षिर्वा अस्यैपेति होवाच ब्रूह्येवेति । मेदं ते नमो-ऽकर्मेति होवाच । मैव नोऽतिप्राक्षीरिति ॥१३॥ स होवाचाऽमत्त्यं

---

४–मन्त्र । ५ सामवैर्यर्शा, 'र' रहित । ६ तत । ७ सोमाद्–। ८ 'द–' का पुनर्लेख । ९ नास्ति । १० अव्य । ११–वत्सा । १२ सामवैम्प्रा । १३–उत्तम् ।

वाव त्वा देवतामभदयं वाव त्वा देवतायै देवताः । वाग्देवत्यं साम वाचो मनो देवता मनसः पशवः पशूनामोषधय ओषधीनामापः । तदेतदद्भ्यो[१४] जातं सामाऽप्सु प्रतिष्ठितमिति ॥१४॥ १५६॥

अष्टादशोऽनुवाके चतुर्थः खण्डः ।

देवासुरा अस्पर्धन्त । ते देवा मनसोदगायन्[१] । तदेषामसुरा अभिद्रुत्य[२] पाप्मना समसृजन्[३] । तस्माद्बहु किं च किं च मनसा ध्यायति । पुण्यं चैनेन ध्यायति पापं च ॥१॥ ते वाचोदगायन् । तां तथैवा[४]ऽकुर्वन्[५] । तस्माद्बहु किं च किं च वाचा वदति । सत्यं[६] चैनया[७] वदत्यनृतं च ॥२॥ ते चक्षुषोदगायन् । तत्तथैवाऽकुर्वन् तस्माद्बहु किं च किं च चक्षुषा पश्यति । दर्शनीयं चैनेन पश्यत्य दर्शनीयं च ॥३॥ ते श्रोत्रेणोदगायन् । तत्तथैवाऽकुर्वन् । तस्माद्बहु किं च[८] किं च[८] श्रोत्रेण शृणोति । श्रवणीयं चैनेन शृणोत्यश्रवणीयं च ॥४॥ तेऽपानेनोदगायन् । तं तथैवाऽकुर्वन् । तस्माद्बहु किं च किं चाऽपानेन जिघ्रति । सुरभि चैनेन जिघ्रति दुर्गन्धि च ॥५॥ ते प्राणेनोदगायन्[९] । अथासुरा आद्रवँस्तया करिष्याम इति मन्यमानाः ॥६॥ स यथाऽश्मानमृत्वा लोष्टो विध्वँसेतैवमेवाऽसुरा

---

१४ भ्यो ।

१ ऽगायन्—२-द्रुत्य अथवा-द्रुत्य । ३-सृजन्-४ थ । ५ कुर्वन्— ६-त्य । ७ थै । ८ नास्ति । ९-गात् ।

व्यध्वँसन्त[10] । स एषोऽश्माऽऽखणो[11] यत्प्राणः ॥७॥ स यथाऽश्मान-माखणमृत्वा[12] लोष्टो विध्वँसत एवमेव स विध्वँसते य एवं विद्वाँ-समुपवदति ॥८॥ ॥९०॥

अष्टादशोऽनुवाके पञ्चमः खण्डः । अष्टादशोऽनुवाकस्समाप्तः ।

[ इति प्रथमोऽध्यायः । ]

———:०———

१० सते, यन्ता । ११–र्णो । १२ माखोम ।

# [ अथ द्वितीयोऽध्यायः । ]

देवानां वै षडुद्गातार आसन् वाक् च मनश्च चक्षुश्च श्रोत्रं चाऽपानश्च प्राणश्च ॥१॥ तेऽध्रियन्त तेनोद्गात्रा दीक्षामहे येनाऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गंलोकमियामेति ॥२॥ तेऽब्रुवन् वाचोद्गात्रा दीक्षामहा इति । ते वाचोद्गात्राऽदीक्षन्त । स यदेव वाचा वदति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥३॥ तान्पाप्माऽन्वसृज्यन[1] । स[2] यदेव वाचा पापं वदति स एव स पाप्मा ॥४॥ तेऽब्रुवन् न वै नोऽयम मृत्युं[3] न पाप्मानमसचात्तीन्। मनसोद्गात्रा दीक्षामहा इति ॥५॥ ते मनसोद्गात्राऽदीक्षन्त । स यदेव मनसा ध्यायति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥६॥ तत्पाप्माऽन्वसृज्यत । स यदेव मनसा पापं ध्यायति स एव स पाप्मा ॥७॥ तेऽब्रुवन्[4] नो न्वाव[5] नोऽयम मृत्युं[3] न पाप्मानमसचात्तीत्[6] । चक्षुषोद्गात्रा दीक्षामहा इति ॥८॥ ते चक्षुषोद्गात्राऽदीक्षन्त । स यदेव चक्षुषा पश्यति तदात्मन[7] आगायदथ य इतरे कामास्तान्देवेभ्यः ॥९॥ तत्पाप्माऽन्वसृज्यत । स यदेव चक्षुषा पापम्पश्यति ( स एव स पाप्मा ) ॥१०॥ तेऽब्रुवन्नोन्वाव

---

१–म । २ 'य' अधिकम्है । ३–त्यु । ४ब्रवीन् । ५न्व । ६अघत्यघ्– । ७–मान्– ।

नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् । श्रोत्रेणोद्गात्रा दीक्षामहा इति ॥११॥ ते श्रोत्रेणोद्गात्राऽदीक्षन्त । स यदेव श्रोत्रेण शृणोति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥१२॥ तत्पाप्माऽन्वसृज्यत । स यदेव श्रोत्रेण पापं शृणोति स एव स पाप्मा ॥१३॥ तेऽब्रुवन्नो न्वाव नोऽयम् मृत्युं न पाप्मानमत्यवाक्षीत् । अपानेनोद्गात्रा दीक्षामहा इति ॥१४॥ तेऽपानेनोद्गात्राऽदीक्षन्त । स यदेवाऽपानेनाऽपानिति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥१५॥ तत्पाप्माऽन्वसृज्यत । स यदेवाऽपानेन पापं गन्धमपानिति स एव स पाप्मा ॥१६॥ तेऽब्रुवन्नो न्वाव नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत् । प्राणेनोद्गात्रा दीक्षामहा इति ॥१७॥ ते प्राणेनोद्गात्राऽदीक्षन्त । स यदेव प्राणेन प्राणिति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥१८॥ तत्पाप्मानाऽन्वसृज्यत । न ह्येतेन प्राणेन पापं वदति न पापं ध्यायति न पापम्पश्यति न पापं शृणोति न पापं गन्धमपानिति ॥१९॥ तेनाऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन् । अपहत्य हैव मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥२०॥ २१॥

प्रथमेऽनुवाके प्रथमः खण्डः ।

---

८ अपानितीति ।

सा या सा वागासीत्सोऽग्निरभवत् ॥१॥ अथ यत्तन्मन आसीत् स चन्द्रमा अभवत् ॥२॥ अथ यत्तच्चक्षुरासीत् स आदित्योऽभवत् ॥३॥ अथ यत्तच्छ्रोत्रमासीत्ता इमा दिशोऽभवन् । ता उ एव विश्वेदेवाः ॥४॥ अथ यस्सोऽपान आसीत्स बृहस्पतिरभवत् । यदस्यै वाचो बृहत्यै पतिस्तस्माद्बृहस्पतिः ॥५॥ अथ यस्स प्राण आसीत्स प्रजापतिरभवत् । स एष पुरुषो प्रजावानु¹ऽयो यः प्राणः । तस्य स्वर एव प्रजाः । प्रजावान्भवति य एवं वेद ॥६॥ तं हैतमेके प्रस्तुतमेव गायन्ति प्राणा३प्राणा३प्राणा३ हुम्भा ओवा इति ॥७॥ तदु होवाच शाट्यायनिरुत एतमर्हति प्रस्तुतं गातुम् । यद्वाव वाचा करोति तदेवास्य कृतम्भवतीति ॥८॥ अथ या एत²स्तोभास्ता एव प्रजातिः । स यद्धुङ्करो³त्यभ्येव तेन क्रन्दति । अथ यत्प्रस्तौ⁴ति तेन स्नाति । अथ यदादिध्वाने रेत एव तेन सिञ्चति । अथ यदुद्गायति रेत एव तेन सिक्तं सम्भावयति⁵ । अथ यत्प्रति-हरति रेत एव तेन सम्भूतं प्रवर्तयति । अथ यदुपद्रवति रेत एव तेन प्रबद्धं विकरोति । अथ यन्निधनमुपैति रेत एव तेन विकृतम्प्रज-

१ यत् । २ प्रतम, अथ । ३ हुर्वेति । ४ ए । ५-भेघ्-, नास्ति प्रति । अथ यत्प्रतिहरति ।

नयति । सैषर्क्सामयोः[६] प्रजातिः ॥९॥ स च एवमेतामृक्सामयोः प्रजातिं वेद प्र हैनमृक्सामनी जनयतः ॥१०॥ २।२॥

प्रथमेऽनुवाके द्वितीयः खण्डः । प्रथमोऽनुवाकस्समाप्तः ॥

---

एष एवेदमग्र आसीत्[१] एष तपति । स एष सर्वेषाम्भूतानां[२] तेजो हर इन्द्रियं वीर्यमादायोर्ध्व उदक्रामत् ॥१॥ सोऽकामयतकमेणाऽन्नं स्वादु मृदु[३] देवानां[४] वनामेति[५] ॥२॥ स तपोऽतप्यत । स तप[६]स्तप्त्वेतेनैवा[७]ऽन्नमभरत् ॥३॥ तं देवाश्चर्षयश्चोपसमैप्सन् । अथैषोऽसुरान्भूतहनोऽसृजतैनस्य पाप्मनोऽनन्वागमाय ॥४॥ तं वाचोपसमैप्सन् । ते वाचं समारोहन् । तेषां वाचम्पर्यादत्त । तस्मात्पर्यात्ता वाक् । सत्यं च ह्येनया वदत्यनृतं च ॥५॥ तम्मनसोपसमैप्सन् । ते मनस्समारोहन् । तेषाम्मनः पर्यादत्त । तस्मात्पर्यात्तम्मन[ः]म् । पुण्यं च ह्येनेन ध्यायति पापं च ॥६॥ तं चक्षुषोपसमैप्सन् । ते चक्षुस्समारोहन् । तेषां चक्षुः पर्यादत्त । तस्मात्पर्यात्तं[८] चक्षुः । दर्शनीयं च ह्येनेन पश्यत्यदर्शनीयं च ॥७॥

---

६ ऋ.सं.ः, ऋसासं.ः ।

१ स । २–ण । ३ मदु । ४ नास्ति । ५ मति । ६ ऐवा। ७ 'उदेवानाम' पूर्व से पुनः है। ८ पर्यात्तं ।

तं श्रोत्रेणोपसमैप्सन् । ते श्रोत्रं समारोहन् । तेषां श्रोत्रम्पर्यादत्त ।
तस्मात्पर्यात्तं[2] श्रोत्रम् । श्रवणीयं चैनेन शृणोत्यश्रवणीयं च ॥८॥
तमपानेनोपसमैप्सन् । तेऽपानं समारोहन् । तेषामपानम्पर्यादत्त ।
तस्मात्पर्यात्तोऽपानः । सुरभि च ह्येनेन जिघ्रति दुर्गन्धि च ॥९॥
तम्प्राणेनोपसमैप्सन् । तम्प्राणेनोपसमाप्नुवन् ॥१०॥ यथाऽसुरा
भूतहन आहवन्भो हरिष्याम इति मन्यमानाः ॥११॥ स यथा-
ऽश्मानमृत्वा लोष्टो विध्वंसेतैवमेवाऽसुरा व्यध्वंसन्त । स एषोऽश्मा-
ऽऽखणो यत्प्राणः ॥१२॥ स यथाऽश्मानमाखणमृत्वा लोष्टो
विध्वंसत एवमेव स विध्वंसते य एवं विद्वांसमुपवदति ॥१३॥२।३॥

तृतीयेऽनुवाके प्रथमः खण्डः ।

स एष यशो दीक्षाग्र उद्गीथो यत्प्राणः[1] । एष हीदं सर्वं वशेकुरुते
॥१॥ वशी भवति वशे[2] स्वान्कुरुते य एवं वेद । अस्य यशोऽग्रे
दीप्यते[3] अमुष्य[4] वासः ॥२॥ तं हैतमुद्गीथं शाट्यायनिराचष्टे वशी
दीक्षाग्र इति । दीक्षाग्रा ह वा अस्य कीर्तिर्भवति य एवं वेद ॥३॥
आभूतिरिति कारीरादयः प्राणं वा अनुप्रजाः पशव आभवन्ति ।
स य एवमेतमाभूतिरित्युपास्त ऐवं प्राणेन प्रजया पशुभिर्भवति ॥४॥

---

२ पर्यात्त, पर्य्याप्त ।

१ यशो तदिदं सर्वं यशोकुरुते ऐसा पाठ देते हैं । २–शो ।
३ प्रमुष्य– । ४ वास ।

सम्भूतिरि[5]ति सात्ययज्ञयः । प्राणं वा अनुप्रजाः पशवस्सम्भवन्ति । स य एवमेतं सम्भूतिरित्युपास्ते सम्ये[व] प्राणेन प्रजया पशुभिर्भवति ॥५॥ प्रभूतिरिति शैलना[6]ः । प्राणं वा अनुप्रजाः पशवः प्रभवन्ति । स य एवमेतम्प्रभूतिरित्युपास्ते प्रैव[7] प्राणेन प्रजया पशुभिर्भवति ॥६॥ भूतिरि[8]ति भाल्लविनः । प्राणं वा अनुप्रजाः पशवो भवन्ति । स य एवमेतम्भूतिरित्युपास्ते भवत्येव प्राणेन प्रजया पशुभिः ॥७॥ अपरोधो[9]ऽनपरुद्ध इति पार्ष्णिश्शैलनः । एष ह्यन्यमपरुणद्धि[10] नैतमन्यः । एष ह[11] वाऽस्य द्विषन्तम्[12]भ्रातृव्यमपरुणद्धि य एवं वेद ॥८॥१॥४॥

द्वितीयेऽनुवाके द्वितीयः खण्डः ।

एकवी[1]र इत्या[2]रुणेयः[3] । एको ह्येवैष वीरो यत्प्राणः । आ हाऽस्यैको वीरो वीर्यवाञ्जायते य एवं वेद ॥१॥ एकपुत्र इति चैकितानेयः । एको[4] ह्येवैष पुत्रो यत्प्राणः ॥२॥ स उ एव द्विपुत्र इति । द्वौ हि प्राणापानौ ॥३॥ स उ एव त्रिपुत्र[5] इति । त्रयो हि प्राणोऽपानो व्यानः ॥४॥ स उ एव चतुष्पुत्र इति । चत्वारो हि प्राणोऽपानो

---

५–भूर । ६ शैलि– ७ 'प्रजया' अधिक है । ८ भूर । ९ अपरोद्धा । १०–णद्धि । ११ से । १२–न्त । १३–धोन्–।

१–रु । २ त्य । ३–णय, 'एको' के स्थान में सर्वत्र 'एका' । ४–प । ५ द्विप्–।

व्यानस्समानः ॥५॥ स उ एव पञ्चपुत्र इति। पञ्च हि प्राणोऽपानो व्यानस्समानोऽवानः ॥६॥ स उ एव षट्पुत्र इति। षड्ढि[6] प्राणोऽपानो व्यानस्समानोऽवान उदानः ॥७॥ स उ एव सप्तपुत्र इति सप्त हीमे शीर्षण्याः प्राणाः ॥८॥ स उ एव नवपुत्र इति सप्त हि शीर्षण्याः[7] प्राणा द्वाववाञ्चौ ॥९॥ स उ एव दशपुत्र इति। सप्त शीर्षण्याः प्राणा द्वाववाञ्चौ नाभ्यां[8] दशमः ॥१०॥ स उ एव बहुपुत्र[9] इति। एतस्य हीदं[10] सर्वाः प्रजाः ॥११॥ एतं ह स्म वैतदुद्गीथं विद्वांसः पूर्वे ब्राह्मणाः कामागायिन[11] आहुः कति ते पुत्रानागास्याम इति ॥१२॥२५॥

त्रिंशेऽनुवाके द्वितीयः खण्डः।

स यदि ब्रूयादेकं[1] म आगायेति प्राण उद्गीथ इति विद्वानेकं मनसा ध्यायेत्। एको हि प्राणः। एको हास्याऽऽजायते ॥१॥ स यदि ब्रूयाद्द्वौ म आगायेति प्राणउद्गीथ इत्येव विद्वान्द्वौ मनसा ध्यायेत्। द्वौ[2] हि प्राणापानौ[3] द्वौ[4] हास्याऽऽजायेते ॥२॥ स यदि ब्रूयात्त्रीन्[5] म आगायेति प्राणउद्गीथ इत्येव विद्वांस्त्रीन्मनसा ध्यायेत्। त्रयो हि प्राणो

६–ना। ७ भवि। ८–ष्म.। ९ षट्पुत्र। १० दशम, दशम। ११–मेन ॥

१ येक–। २ ह्यो। ३ 'व्यानः' अधिक है। ४ 'स ह्यस्याऽऽजायेते' अधिक है। ५ मन।

ऽपानोऽव्यान॰। त्रयो हैवाऽस्याऽऽजायन्ते ॥३॥ स[6] यदि ब्रूयाच्चतुरो म आगायेति प्राण उद्गीथ इत्येव विद्वांश्चतुरो मनसा ध्यायेत्। चत्वारो हि प्राणोऽपानो व्यान[6]स्समान॰। चत्वारो हैवास्याऽऽजायन्ते ॥४॥ स यदि ब्रूयात्पञ्च म आगायेति प्राण उद्गीथ इत्येव विद्वान्पञ्च मनसा ध्यायेत्। पञ्च हि प्राणोऽपानो व्यानस्समानोऽवानः। पञ्च हैवाऽस्याऽऽजायन्ते ॥५॥ स यदि ब्रूयात् षळ्म आगायेति प्राण उद्गीथ इत्येव विद्वान् षड्मनसा ध्यायेत्। षड्[7] प्राणोऽपानो व्यानस्समानोऽपान उदानः। षड्ढ[8] ऽस्याऽऽजायन्ते ॥६॥ स यदि ब्रूयात्सप्त म आगायेति प्राण उद्गीथ इत्येव विद्वान् सप्त मनसा ध्यायेत्। सप्त हीमे शीर्षण्याः प्राणाः। सप्त हैवाऽस्याऽऽजायन्ते ॥७॥ स यदि ब्रूयान्नव म आगायेति प्राण उद्गीथ इत्येव विद्वान्नव मनसा ध्यायेत्। सप्त शीर्षण्याः प्राणा द्वाववाञ्चौ। नव हैवाऽस्याऽऽजायन्ते ॥८॥ स यदि ब्रूयाद्दश म आगायेति प्राण उद्गीथ इत्येव विद्वान्दश[9] मनसा ध्यायेत्। सप्त शीर्षण्याः प्राणा द्वाववाञ्चौ नाभ्यां दशमः। दश हैवाऽस्याऽऽजायन्ते ॥९॥ स यदि ब्रूयात्सहस्रं म आगायेति प्राण उद्गीथ इत्येव विद्वान् सहस्रं मनसा ध्यायेत्। सहस्रं हैत आदित्यरश्मयः। [10]तेऽस्य पुत्राः। सहस्रं हैवाऽस्याऽऽजायन्ते ॥१०॥ एवं [11]हैतमुद्गीथ

६ नास्ति। स यदि · · व्यानस्स। ७ भा। ८ हे। ९ द्वा। १० त। ११ ह।

म्पर आट्णारः कद्दीवाँस्त्रसदस्युरिति पूर्वे महाराजाऽश्रो[१२]त्रियास्सहस्रपुत्रमुपनिपेदुः। ते ह सर्व एव सहस्रपुत्रा आसुः ॥११॥ स य[१३] एवैवं वेद सहस्रं हैवाऽस्य पुत्रा भवन्ति ॥१२॥ २३८॥

द्वितीयेऽनुवाके चतुर्थं खण्ड । द्वितीयोऽनुवाकः समाप्त ।

---

शर्यातो[१] वै मानवः प्राच्यां स्थल्या[२]मयजत[३]। तस्मिन् ह भूतान्युहीथेऽपित्वमो[४]पारे[५] ॥१॥ तं देवा बृहस्पतिनोद्गात्रा दीक्षामहा इति पुरस्तादागच्छन्नयं त उद्गायत्विति। वम्रेणाऽऽजद्विषेण[६] पितरो दक्षिणतो[७]ऽयं त उद्गायत्वित्युशनसा काव्येनाऽसुराः[८][९] पश्चादय[१०] त उद्गायत्विसमास्येनाऽऽङ्गिरसेन[११] मनुष्या उत्तरतोऽयं त उद्गायत्विति ॥२॥ स हैनांवके[१२] हन्तेनान् पृच्छानि कियतो[१३] वा एक ईशे कियत एकः कियत एक इति॥३॥ स होवाच बृहस्पतिं[१३] यन्मेत्वमुद्गायेः किं ततस्स्यादि[१४]ति ॥४॥ स होवाच[१५] देवेष्वेव श्रीमस्यादेवेष्वीशा स्वर्गमुत्वांल्लोकं गमयेयमिति ॥५॥ अथ होवाच वम्रमाजद्विषम्यन्मेत्वमुद्गायेः किं ततस्स्यादिति ॥६॥ स

१२ ऊँत्। १३ यद्।

१ शर्य्या- २ स्थलशाम। ३ मजॅयत। ४ ऽपित्सम्म। ५ पेशिरे। ६ विम्य-। ७ दक्षपानो। ८ कांव्येना। ९-रां १० दयात। ११ मयांहरयेना, मयद्धिस्येना। १२ क्रिय। १३ ति। १४ थ्रिशम्'मधिदः दे। १५ नास्ति, स होवाच ...... ततस्स्यादिति।

होवाच पितृष्वेव श्रीस्स्यात्पितृष्वीशा स्वर्गमु त्वां लोकं गमयेयमिति ॥७॥ अथ होवाचोशनसं काव्यं[16] यन्मे[17] त्वमुद्गायेः किं ततस्स्यादिति ॥८॥ स होवाचासुरेष्वेव श्रीस्स्यादसुरेष्वीशा स्वर्गमु[18] त्वां लोकं गमयेयमिति ॥९॥ अथ होवाचाऽयास्यमाङ्गिरसं यन्मे त्वमुद्गायेः[19] किं ततस्स्यादिति ॥१०॥ स होवाच देवानेव देवलोके दध्याम्[20] मनुष्या-न्मनुष्यलोके पितॄन्[21] पितृलोके नुदेयाऽस्माल्लोकादसुरान्[22] स्वर्गमु त्वां लोकं गमयेयमिति ॥११॥२।७।

तृतीयेऽनुवाके प्रथम खण्डः ।

स होवाच त्वं मे भगव उद्गाय य एतस्य सर्वस्य यशो[1][ऽसी]ति ॥१॥ तस्य हाऽयास्य एवोज्जगौ । तस्मादुद्गाता हत उत्तरतो निवेशनं लिप्सेत । एतद् नाऽऽरुद्ध निवेशनं यदुत्तरतः ॥२॥ उत्तरत आगतो यास्य आङ्गिरसश्शर्यातस्य[2] मानवस्योज्जगौ । स प्राणेन देवान्देवलोके ऽदधादपानेन मनुष्यान्मनुष्यलोके व्यानेन पितॄन् पितृलोके हिङ्कारेण वज्रेणाऽस्माल्लोकादसुराननुदत ॥३॥ तान् होवाच दूरं गच्छतेति । स दूरो ह नाम लोकः । तं ह जग्मुः । त एतेऽसुरा असम्भाव्यम्[3] पराभूताः ॥४॥ छन्दोभिरेव वाचा

१६ य । १७ जे । १८–शा: । १९ न्वं । २०–ध्यात् । २१–तॄन् । २२ 'उ' अधिक है । २३ हं ॥

१–शस । २–तन् । ३ असंहेयम्–।

शर्याति[४]म्मानवं स्वर्गं लोकं गमयांचकार ॥५॥ ते होचुरसुरा एत तं वेदाम यो नोऽयमित्थमघत्तीति। तत[५] आगच्छन्[६]। तमेताऽपश्यन् ॥६॥ तेऽब्रुवन्नयं वा आस्य इति। यदब्रुवन्नयं वा आस्य इति तस्मादयमास्यः। अयमास्यो[७] ह वै[८] नामैषः। तमयास्य इति परोक्षमाचक्षते ॥७॥ स प्राणो वा अयास्यः। प्राणो ह वा एनान् स नुनुदे ॥८॥ स य एवं विद्वानुद्गायति प्राणेनैव देवान्देवलोके द्पालपानेन[९] मनुष्यान्[१०]मनुष्यलोके व्यानेन पितॄन्[१] पितृलोके हिङ्कारेणैव[२] वज्रेणाऽस्माल्लोकाद्द्विषन्तम्भ्रातृव्यं नुदते ॥९॥२॥८॥

तृतीयेऽनुवाके द्वितीय खण्ड।

तं ह भूयाद्दूरं गच्छेति। स यमेव लोकमसुरा अगच्छंस्तं हैव[१] गच्छति ॥१॥ छन्दोभिरेव वाचा यजमानं स्वर्गं लोकं गमयति ॥२॥ ता एता व्याहृतयः[२]। भेसोति वाग्[इति]भूर्भुवस्स्वारित्य[उदिति]॥३॥ स यत्सेति तत्[३]प्राणस्तदयं लोकस्तदिमं लोकमस्मिँल्लोक आभजति ॥४॥ एसपानस्तदसौ लोकस्तदमुं लोकममुष्मिँल्लोक आभजति ॥५॥ वागिति तद्ब्रह्म तदिदमन्तरिक्षम ॥६॥ भूर्भुवस्स्वारिति सा त्रयी-विद्या ॥७॥ उदिति सोऽसावादित्यः। तयदुदित्युदिव स्तेप-

४ दोय्या-। ५ स। ६-द्धस्। ७-असो। ८ पान्-। ९ पहिंय्-। १०-पान् ॥

१-षा। २ स्या-। ३ सत्।

यति[४] ॥८॥ तद्यदेकमेवाऽभिसम्पद्यते तस्मादेकवीरः । एको ह तु सन्वीरो वीर्यवान् भवति । आहाऽस्यैको[५] वीरो वीर्यवान्[६] जायते य एवं वेद ॥९॥ तद्ध होवाच शाठ्यायनिर्बहुपुत्र एष उद्गीथ[७] इत्ये-वोपासितव्यम् । बहवो ह्येत आदित्य[८] रश्मयस्तेऽस्य[९] पुत्राः । तस्माद्बहुपुत्र एष उद्गीथ इत्येवोपासितव्यमिति ॥१०॥२।९॥

तृतीयेऽनुवाके तृतीय खण्ड । तृतीयोऽनुवाकस्समाप्तः ।

---

देवासुरास्समयतन्तेत्याहुः । न ह वै तद्देवासुरास्सम्येतिरे । प्रजापतिश्च ह वै तन्मृत्युश्च सम्येताते ॥१॥ तस्य ह प्रजापतेर्देवाः प्रियाः[१] पुत्रा अन्त आसुः । तेऽब्रियन्त केनोद्गात्रा दीक्षामहै येना-ऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति ॥२॥ तेऽब्रुवन्वा-चोद्गात्रा दीक्षामहा इति ॥३॥ ते वाचोद्गात्राऽदीक्षन्त । तेभ्य[२] इदं वागागायद्यदिदं वाचा वदति यदिदं वाचा भुञ्जते ॥४॥ ताम्पाप्माऽन्वसृज्यत । स यदेव वाचा पापं वदति स एव स पाप्मा ॥५॥ तेऽब्रुवन् न वै नोऽयम्मृत्युं न पाप्मानमत्यवादीत्[३] । मनसोद्गात्रा दीक्षामहा इति ॥६॥ ते मनसोद्गात्रा दीक्षन्त । तेभ्य इदम्मन

---

४ इयेप्-।५-ए।६-यावान्।७-ए (इत्य)।८ आदित्यंस्य।९ त ॥

१-पाय । २ ' नोद्गात्रा दीक्षामहा इति ' अधिक है पर ' ते ' और ' भ्य ' के बीच लाल रङ्ग से काटा गया है । ३ अवत्य्-।

आगायद्यदिदम्मनसा ध्यायति यदिदम्मनसा भुङ्क्ते ॥७॥ तत्पाप्माऽन्वसृज्यत । स यदेव मनसा पापं ध्यायति स एव स पाप्मा ॥८॥ तेऽब्रुवन्नोन्वाव नोऽयं मृत्युं न पाप्मानमसवाक्षीत् । चक्षुषोद्गात्रा दीक्षामहा इति ॥९॥ ते चक्षुषोद्गात्राऽदीक्षन्त । तेभ्य इदं चक्षुरागायद्यदिदं चक्षुषा पश्यति यदिदं चक्षुषा भुङ्क्ते ॥१०॥ तत्पाप्माऽन्वसृज्यत । स यदेव चक्षुषा पापम्पश्यति स एव स पाप्मा ॥११॥ तेऽब्रुवन्नोन्वाव नोऽयम्मृत्युं न पाप्मानमसवाक्षीत् । श्रोत्रेणोद्गात्रा दीक्षामहा इति ॥१२॥ ते श्रोत्रेणोद्गात्राऽदीक्षन्त । तेभ्य इदं श्रोत्रमागायद्यदिदं श्रोत्रेण शृणोति यदिदं श्रोत्रेण भुङ्क्ते ॥१३॥ तत्पाप्माऽन्वसृज्यत । स यदेव श्रोत्रेण पापं शृणोति स एव स पाप्मा ॥१४॥ तेऽब्रुवन्नोन्वाव नोऽयं मृत्युं[४] न पाप्मानमसवाक्षीत्[५] । प्राणेनोद्गात्रा दीक्षामहा इति ॥१५॥ ते प्राणेनोद्गात्राऽदीक्षन्त । तेभ्य इदं प्राण आगायद्यदिदं प्राणेन प्राणिति यदिदं प्राणेन भुङ्क्ते ॥१६॥ तत्पाप्माऽन्वसृज्यत । स यदेव प्राणेन[ पापं ]प्राणिति स एव स पाप्मा॥१७॥तेऽब्रुवन्नोन्वाव नो[६]ऽयं मृत्युं न पाप्मानमसवाक्षीत्। अनेन मुख्येन प्राणेनोद्गात्रा दीक्षामहा इति ॥१८॥ तेऽनेन

४-त्यु । ५ 'म' अधिक है । ६ ने ।

मुख्येन प्राणेनोद्गात्राऽऽदीत्तन्त ॥१९॥ सोऽब्रवीन्मृत्युरेष एषां स उद्गाता येन मृत्युमत्येष्यन्तीति ॥२०॥ न ह्येतेन प्राणेन पापं वदति न पापं ध्यायति न पापम्पश्यति न पापं शृणोति न पापं गन्धमपानिति ॥२१॥ तेनाऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन्[8] । अपहत्य हैव मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥२२॥२।१०॥

चतुर्थेऽनुवाके प्रथम खण्डः ।

स यथा हत्वा मभृष्याऽतीयादेवमेवैतम्मृत्युमत्यायन्[1] ॥१॥ स वाचम्प्रथमामत्यवहत् । ताम्परेण मृत्युं[2] न्यदधात् । सोऽग्निरभवत् ॥२॥ अथ मनोऽत्यवहत्[3] । तत्परेण मृत्युं[2] न्यदधात् । स चन्द्रमा अभवत् ॥३॥ अथ चक्षुरत्यवहत् । तत्परेण मृत्युं[2] न्यदधात् । स आदित्योऽभवत् ॥४॥ अथ श्रोत्रमत्यवहत् । तत्परेण मृत्युं[2] न्यदधात् । ता इमा दिशोऽभवन् । ता उ एव विश्वे देवाः ॥५॥ अथ प्राणमत्यवहत् । तम्परेण मृत्युं[2] न्यदधात् । स वायुरभवत् ॥६॥ अथाऽऽत्मने केवलमेवाऽन्नाद्यमागायत्[4] ॥७॥ स एष

७-यम । ८ गमयन् ।

१ स अधिक है, 'अत्यायन्' के स्थान में-यत् । २-यु । ३-न् । ४ द्या ।

एवाऽयास्यः । आस्ये[५] धीयते[६] । तस्मदयास्यः । यद्वेवा[७] [ऽयम्]
आस्य[८] रमते तस्माद्देवाऽयास्यः[९] ॥८॥ स एष एवाऽऽङ्गिरसः ।
अतो हीमान्यङ्गानि रसं लभन्ते । तस्मादाङ्गिरसः[१०] । यद्वैवैषा-
मङ्गानां रसस्तस्मा द्देवाऽऽङ्गिरसः ॥९॥ तं देवा अब्रुवन् केवलं
वा आत्मनेऽन्नाद्यमागासीः । अनु न एतस्मिन्ननाद्य आभज[११] ।
एतदस्याऽनामयत्वम्[१२]स्तीति[१३] ॥१०॥ तं वै प्रविशतेति । स वा
आकाशान्[१४] कुरुध्वेति । स इमान् प्राणानाकाशान्[१५]कुरुत[१६] ॥११॥
तं वागेव भूत्वाऽग्निः प्राविशन्[१८]मनो भूत्वा चन्द्रमाश्चक्षुर्भूत्वा
ऽऽदित्यश्श्रोत्रम्भूत्वा दिशः प्राणो भूत्वा वायुः ॥१२॥ एषा वै
दैवी परिषद्दैवी सभा दैवी संसत् ॥१३॥ गच्छति ह वा एतां[१७]
दैवीम्परिषदं दैवीं सभां दैवीं[१८] संसदं य एवं वेद ॥१४॥२॥११॥

चतुर्थेऽनुवाके द्वितीयः खण्डः ।

यत्रो ह वैक चैता[१] देवता निसृशन्ति न हैव तत्र कश्चन
पाप्मान्यङ्गः परिशिष्यते ॥१॥ स विद्यान्नेह कश्चन पाप्मान्यङ्गः
परिशेक्ष्यते[२] सर्व[३]मेवै[४]ता देवताः पाप्मानं निघ्नयन्तीति । तथा हैव

---

५ आसे । ६ ध्यति । ७ वर्ग । ८ स्ये । ९-ऽयास्य । १० ग्रेंड- ।
११ भः । १२ आमयत्वम् । १३ असी । १४ आकाशात् ।
१५ आशासनम् । १६ कुरुत । १७ '-ां' नास्ति । १८ प्रंवी- ॥

१ चे । २ क्षते । ३ पयम । ४ एता ।

भवति ॥२॥ य उ ह वा एवंविदमृच्छति[5] यथैता[6] देवता ऋत्वा नीयादेवं न्येति[7]। एतासु हैवेनं देवतासु मपत्नमेतासु वसन्तमुपवदति ॥३॥ तस्य हैतस्य नैव काचनाऽऽर्तिरस्ति[8] य एवं वेद। य एवैनमुपवदति स आर्तिमार्च्छति ॥४॥ स य एनमृच्छादेव[10] ता देवता उपद्रुत्य ब्रूयादयम्माऽऽरत्[11] स इमामार्ति[12] न्येत्विति। तां हैवाऽऽर्ति न्येति ॥५॥ यावद्वावासा[13] उ हाऽस्येमे प्राणा अस्मिँल्लोक एतावदावासा[14] उ हाऽस्यैता देवता अमुष्मिँल्लोके भवन्ति ॥६॥ तस्मादु हैवं विद्वानेवाऽग्रहतायै[14] विभीयान्माऽल्लोकतायै। एता मे देवता अस्मिँल्लोके गृहान् करिष्यन्ति। एता अमुष्मिँल्लोके[15] भवन्ति। तस्मादु लोकम्प्रदास्यन्तीति[16] ॥७॥ तस्मादु हैवं विद्वानेवाऽग्रहतायै विभीयान्माऽल्लोकतायै। एता मे देवता अस्मिँल्लोके गृहेभ्यो गृहान् करिष्यन्ति स्वेभ्य[17] आयतनेभ्य इति हैव विद्यात् [एता] देवता[18] अमुष्मिँल्लोके लोकम्प्रदास्यन्तीति ॥८॥ तस्मादु हैवं

---

५-विद् वा विद। ६ दुच्छति। ७ नेति। ८-तीर्। ९ आच्छति। १० एम। ११ रात्। १२ अत्ति। १३-दावशा। १४ ग्रह-। १५ अस्मिन्। १६ प्रयदा-। १७ 'आयतनेभ्य' अधिक है। १८ एव ता॥

विद्वांसैवाऽस्पृहतायै बिभीयाज्जाऽलोकतायै एता म एतदुभयं संन्यस्यन्तीति हैव विद्यात् । तथा हैव भवति ॥६॥२।१२॥

चतुर्थेऽनुवाके तृतीय खण्डः । चतुर्थोऽनुवाकस्समाप्तः ।

---

देवा वै ब्रह्मणो वत्सेन[1] वाचमदुहन् । अग्निर्हं वै ब्रह्मणो वत्सः ॥१॥ सा या सावाग्ब्रह्मैव तत् । अथ योऽग्निर्मृत्युस्सः ॥२॥ तामेतां वाचं यथा धेनुं वत्सेनोपसृज्य[2] प्रत्तां दुहीतैवमेव देवा वाचं सर्वान्कामानदुहन्[3] ॥३॥ दुहे[4] ह वै वाचं सर्वान्कामान्य एवं वेद । स हैपोऽनानृतो वाचं देवीमुदिन्धे[5] वद वद वदेति ॥४॥ तद्यदिह[6] पुरुषस्य पापं कृतम्भवति तदाविष्करोति । यदिहैनदपि रहसीव कुर्वन्मन्यतेऽथ[7][8] हैनदाविरेव करोति । तस्माद्वाव पापं न कुर्यात्[9] ॥५॥२।१३॥

पञ्चमेऽनुवाके प्रथमः खण्डः ।

एप उ ह वाव देवानां नेदिष्ठमुपचर्यो यदग्निः ॥१॥ तं साधूपचरेत् । य एनमस्मिँल्लोके साधूपचरति[1] तमेषोऽमुष्मिँल्लोके

---

१ पत्तेन, पत्सेन । २ वह्य- । ३-र । ४ जहे । ५ उदिन्धे । ६ यमिह । ७-त । ८ अथ्- । ९ 'एप उ ह वा' दूसरे अनुवाक का यहां अधिक है ॥

१ चरति ।

साधूपचरति । अथ य एनमस्मिँल्लोके नाऽऽद्रियते तमेषोऽमुष्मिँ-
ल्लोके नाऽऽद्रियते । तस्माद्वा अग्निं साधूपचरेत् ॥२॥ तं नेव
हस्ताभ्यां स्पृशेन्न पादाभ्यां न दण्डेन[२] ॥३॥ हस्ताभ्यां स्पृशति
यदस्याऽन्तिकमनेनेनिक्ते । अथ यदभिप्रसारयति तत्पादा-
भ्याम् ॥४॥ स एनमास्पृष्ट ईश्वरो दुर्धायां धातोः । तस्माद्वा
अग्निं साधूपचरति । सुधायां हैवैनं दधाति ॥६॥२।१.४॥

पञ्चमेऽनुवाके द्वितीय खण्ड ।

एष उ ह वाव देवानाम्महाशनतमो यदग्निः ॥१॥ तम
[१]त्यमदा[२]नोऽश्नीयात् । यो वै महाशनेऽनभ्यश्नातीश्वारो हैनम-
[३]भिपङ्क्तोः । पू[४]ति[५]मिव हाऽश्नीयात्[६] ॥२॥ अथो ह मोक्तेऽशने ब्रूयात्
समिन्त्स्वाऽग्निमिति । स यथा भोक्तेऽश्ने श्रेयाँसम्परिवेष्टएवं
ब्रूयात्ताद्दक्[७] तत् ॥३॥ एतद् ह वाव साम यद्वाक् । यो वै चक्षु-
स्साम श्रोत्रं सामेत्युपास्ते न[८] ह तेन करोति ॥४॥ अथ य[९]
आदित्यस्साम चन्द्रमास्सामेत्युपास्ते न[८] हैव तेन करोति ॥५॥
अथ यो वाक् सामेत्युपास्ते स एवाऽनुष्ठया साम वेद । वाचा हि

२ तण्डेनम, तर्ण्डेनम ।

१ प्र-। २ दद्मासीनो । ३ अभिप्( क )केत्ताः । ४-इद् । ५ इवमिव । ६ उप्री-। ७ तम । ८ ना । ९ यद् ।

साम्नाऽऽर्त्विज्यं क्रियते ॥६॥ स यो वाचस्स्वरो जायते सोऽग्निर्वाग्मेव वाक् । तदे[10]कधा साम भवति ॥७॥ स य एवमेतदे-कधा साम भवेद्धैवं हैतदेकधा साम भवतीत्येकधैव श्रेष्ठस्स्वानाम्भवति ॥८॥ तस्मादु हैवंविदमेव साम्नाऽऽर्त्विज्यं कारयेत । स ह वाव साम वेद य एवं वेद ॥९॥२।१।५॥

पञ्चमेऽनुवाके तृतीयः खण्डः । पञ्चमोऽनुवाकस्समाप्तः ॥

---

१० एत—।

# [तृतीयोऽध्यायः ।]

एषा ह वाव कृत्स्ना देवताऽर्धदेवता एवाऽन्याः । अयमेव योऽयम्पवते ॥१॥ एष एव सर्वेषां देवानां ग्रहः ॥२॥ स हैषो-ऽस्तं नाम । अस्तमिति हेह पश्चाद्[1]ग्रहणमाचक्षते ॥३॥ स यदादित्यो-ऽस्तमगादिति ग्रहणमगादिति हैतद् । तेन सोऽसर्वः । स एतमेवा-ऽप्येति ॥४॥ अस्तं चन्द्रमा एति । तेन सोऽसर्वः । स एतमेवाऽप्ये-ति ॥५॥ अस्तं नक्षत्राणि यन्ति । तेन तान्यसर्वाणि । तान्येतमेवाऽपियन्ति ॥६॥ अन्वग्निर्गच्छति । तेन सोऽसर्वः । स एतमेवाऽप्येति ॥७॥ एत्यहः । एति रात्रिः[2] । तेन ते असर्वे । ते एतमेवा[3]ऽपीतः ॥८॥ मुह्यन्ति दिशो न वै ता[4] रात्रिम्प्रज्ञायन्ते । तेन ता असर्वाः । ता एतमेवाऽपियन्ति ॥९॥ वर्षति च पर्जन्य उच्च गृह्णाति । तेन सोऽसर्वः[5] । स एतमेवाऽप्येति ॥१०॥ क्षीयन्त आप एवमोषधय[6] एवं वनस्पतयः । तेन तान्यसर्वाणि । तान्येतमेवाऽपियन्ति ॥११॥ तद्यदेतत्सर्वं वायुमेवाऽप्येति तस्माद्वा-

---

१ पँचा । २–र. । ३–ताः । ४ तां । ५ 'स साम वेद' अधिक है ।
६ एष–, ओषा– ।

प्रुरेव साम ॥१२॥ स ह वै सामवित्स [कृत्स्नं] साम वेद य एवं वेद ॥१३॥ अथाऽध्यात्मम् । न वै स्वपन् वाचा वदति । सेयमेव प्राणमप्येति ॥१४॥ न मनसा ध्यायति । तदिदमेव प्राणमप्येति ॥१५॥ न चक्षुषा पश्यति । तदिदमेव प्राणमप्येति ॥१६॥ न श्रोत्रेण शृणोति । तदिदमेव प्राणमप्येति ॥१७॥ तद्यदेतत्सर्वं प्राणमेवाऽभिसमेति तस्मात्प्राण एव साम ॥१८॥ स ह वै सामवित्स कृत्स्नं साम वेद य एवं वेद ॥१९॥ तद्यदिदमाहुर्न पताऽद्य वातीति[स] हैतत्पुरुषेऽन्तर्निरमते स पूर्णस्स्वेदमान आस्ते ॥२०॥ तद्ध शौनकं च कापेयमभिप्रतारिणं च[काक्षसेनिम्] ब्राह्मणः परिवेविष्यमाणा उपावव्राज ॥२१॥३।१॥

प्रथमेऽनुवाके प्रथमः खण्डः ।

तौ ह बिभिक्षे । तं ह नाऽऽददाते को वा कोऽयमिति मन्यमानौ ॥१॥ तौ होपजगौ ।

महात्मनश्चतुरो देव एकः कस्स जगार भुवनस्य गोपाः ।

तं कापेय न विजानन्त्येकेऽभिप्रतारिन् बहुधा निविष्टम् ॥

---

७ प्रत्म । ८-यति । ९-भिने । १०-णा । ११-काव । १२ विष्या- । १३-माजा ॥

१ भिक्षु- । २ ददतो । ३ सो । ४ काजुपेय । ५ निविष्टम् ।

इति ॥२॥ स होवाचाऽभिप्रतारीमं[6] वाव[7] प्रपद्य प्रतिब्रूहीति । त्वया[8] वा[9] अयम्प्रत्युच्य[10] इति[11] ॥३॥ तं ह प्रत्युवाच[12]—

आत्मा देवानामुत मर्त्यानां[13] हिरण्यदन्तो रपसो[14] न सूनुः[15] ।
महान्तमस्य[16] महिमानमाहुरनद्यमानो यदद[17][18] तमत्ति[19] ॥

इति ॥४॥ महात्मनश्चतुरो [देव] एक इति । वाग्वा[20] अग्निः[21] । स महात्मा देवः । स यत्र स्वपिति[22] तद्वाचम्प्राणो गिरति ॥५॥ मनश्चन्द्रमास्स महात्मा देवः । स यत्र स्वपिति तन्मनः[23] प्राणो गिरति ॥६॥ चक्षुरादित्यस्स[24] महात्मा देवः । स यत्र स्वपिति तच्चक्षुः प्राणो गिरति ॥७॥ श्रोत्रं दिशस्ता[25] महात्मानो देवाः । स यत्र स्वपिति तच्छ्रोत्रं प्राणो गिरति ॥८॥ तद्यन्महात्मनश्चतुरो देव एक इत्येतद्ध तत् ॥९॥ कस्स[26] जगारे[27][28]ति । प्रजापतिर्वै कः । स हैतज्जगार ॥१०॥ भुवनस्य गोपा इति । स उ वाव भुवनस्य गोपाः ॥११॥ तं कापेय[29] न विजानन्त्येक इति । न ह्येतमेके विजानन्ति ॥१२॥ अभिप्रतारिन् बहुधा निविष्टमिति । बहुधा ह्येष निविष्टो यत्प्राणः ॥१३॥ आत्मा देवानामुत[30] मर्त्यानामिति । आत्मा ह्येष देवाना-

६ म(त्र)म, मा । ७ यय्या, यय्या । ८ अया । ९ वाय । १०–युश्चे । ११ इति । १२–याच । १३ मर्त्य–। १४ परसो । १५ [illegible] । १६ मभि–। १७ यदि । १८ दतम, दँतम । १९ यँति । २० पाश्, या । २१ था । २२ स्यतिपिति । २३–न, इस के पश्चात् प्रा । २४–अर् । २५ महात्मा अधिक है । २६ क । २७ सो । २८ जॅगर–। २९–पध । ३०–मो ।

मुत मर्त्यानाम् ॥१४॥ हिरण्यदन्तो रपसो[30] न[31] सूनुरिति । न ह्येष सूनुः । सूनुर्न्वा[36] ह्येष सन्न[32] सूनुः ॥१५॥ महान्तमस्य महिमानमाहुरिति । महान्तं ह्येतस्य[33] महिमानमाहुः[34] ॥१६॥ अनघमानो यद्दन्तमचीति[35] । अनघमानो ह्येषोऽदन्तमत्ति ॥१७॥३॥२॥

प्रथमेऽनुवाके द्वितीयः खण्डः ॥

तस्यैष श्लोकः[1] समुद्रं यदसावादित्यः । तस्माद्वायमस्य स्तोत्रे णाऽवान्यानेच्छया अनाद्धिया[2] इति ॥१॥ स एष एवोक्यम् । यत्पुरस्तादवानिति[3] तदेतदुक्थस्य शिरो यद्दक्षिणतस्[4] स दक्षिणः पक्षो यदुत्तरतस्स[5] उत्तरः पक्षो यत्पश्चात्[तत्]पुच्छम् ॥२॥ अयमेव प्राण उक्थस्याऽऽत्मा । स य एवमेतमुक्थस्याऽऽत्मानमात्मन्प्रतिष्ठितं वेद स हाऽमुष्मिँ लोके साङ्गस्सतनुस्[सर्वस्]सम्भवति[7] ॥३॥ यम्बद्ध वा अमुष्मिँल्लोके यदिदम्पुरुषस्याऽऽण्डौ शिश्नं कर्णौ नासिके यत्किं चाऽनस्थिकं न सम्भवति ॥४॥ अथ य एवमेतमुक्थस्या[8][9]ऽऽत्मानमात्मन्प्रतिष्ठितं वेद स हैवाऽमुष्मिँल्लोके साङ्गस्सतनुस्सर्वस्सम्भवति॥५॥ तदेतद्वैश्वामित्रमुक्थम् । तदपं वै विश्वम्याणो मित्रम्

३१-से । ३२ नम् । ३३ स् । ३४ माहुर् । और 'इति महान्तं ह्येतस्य महिमाहुः' अधिक है । ३५ अन्तम । ३६ सूनुर-॥

१ समाद्र- । २ वह्रुच- । ३ वा इति । ४-दयाः । ५ सद् । ६ तद् । ७ सांगस्स । ८-नद् । ९ अकय- ।

॥६॥ तद् विश्वामित्रश्श्रमेण तपसा ब्रह्मचर्येणेन्द्रस्य[10] प्रियं धामो-
पजगाम ॥७॥ तस्मा उ हैतत्प्रोवाच यदिदम्[11] मनुष्यानागतम् ॥८॥
तद् स उपनिषसाद् ज्योतिरेतदुक्थमिति[12] ॥९॥ ज्योतिरिति द्वे
अक्षरे प्राण इति द्वे अन्नमिति द्वे । तदेतदन्न एव प्रतिष्ठितम् ॥१०॥
अथ हैनं जमदग्निरुपनिषसादाऽऽयुरेतदुक्थमिति[13] ॥११॥ आयुरिति
द्वे अक्षरे प्राण इति द्वे अन्नमिति द्वे । तदेतदन्न एव प्रतिष्ठितं ॥१२॥
अथ हैनं[14] वसिष्ठ उपनिषसाद गौरेतदुक्थमिति । तदेतदन्नमेव[15] ।
अन्नं हि गौः ॥१३॥ तदाहुर्यदस्य प्राणस्य पुरुषश्शरीरमथ केना-
ऽन्ये[16] प्राणाश्शरीरवन्तो भवन्तीति ॥१४॥ स ब्रूयाद्यद्वाचा वदति
तद्वाचश्शरीरं यन्मनसा ध्यायति तन्मनसश्शरीरं यच्चक्षुषा पश्यति
तच्चक्षुषश्शरीरं यच्छ्रोत्रेण शृणोति तच्छ्रोत्रस्य शरीरम् । एवमु
हाऽन्ये प्राणाश्शरीरवन्तो भवन्तीति ॥१५॥३॥

प्रथमेऽनुवाके तृतीयः खण्डः ।

तदेतदुक्थं सप्तविधम् । शस्यते स्तोत्रियोऽनुरूपो[1] धाय्या
प्रगाथस्सूक्तं निवित्परिधानीया[2] ॥ १ ॥ इयदेव[3] स्तोत्रियो

---

१० प्र- ११ तद् । १२ उप- । १३ (-साद) मेर्, ०ाऽगौर् । १४-ष्ठ । १५ ऽ.ेव् । १६ ऽन्येन ।

१ प्रभिन्न अधिक है । २-नीयम् । ३ नास्ति ।

अग्निरनुरूपो वायुर्धाय्या[4]ऽन्तरिक्षम्प्रगाथो द्यौ[5]स्सूक्तमादित्यो निवित् । तस्माद्बह्वृचा उदिते निविदमधीयन्ते । आदित्यो हि निवित् । दिशः परिधानीयेत्यधिदैवतम् ॥२॥ अथाध्यात्मम् । आत्मैव श्रोत्रियः प्रजाऽनुरूपः प्राणो धाय्या[6] मनः प्रगाथश्शिरस्सूक्तं चक्षुर्निविच्छ्रोत्रम्परिधानीया[7] ॥३॥ तद्धैतदेके त्रिष्टुभा परिदधत्यनुष्टुभैके । त्रिष्टुभा त्वेव परिदध्यात् ॥४॥ तद्धैतदेक एता व्याहृतीरभिव्याहृत्य शंसन्ति[8] महान्मह्या[9] समधत्त देवो देव्या समधत्त ब्रह्म ब्राह्मण्या[10] समधत्त । तपस्समधत्त समधत्तेति ॥५॥ तस्मादिदानीम्[11]पुरुषस्य शरीराणि प्रतिसंहितानि । पुरुषो ह्येतदुक्थम् ॥६॥ महान्मह्या समधत्तेति । अग्निर्वै महानियमेव मही ॥७॥ देवो देव्या समधत्तेति । वायुर्वै देवोऽन्तरिक्षं देवी[12] ॥८॥ ब्रह्म ब्राह्मण्या समधत्तेति । आदित्यो वै ब्रह्म द्यौर्ब्राह्मणी[13] ॥९॥ तासां वा एतासां देवतानां द्वयोर्द्वयोर्[14]देवतयोर्नव-नवाक्षराणि सम्पद्यन्ते एताद्वि[15] लोकास्त्रिणवा[16] भवन्ति ॥१०॥ तद्ब्रह्म वै त्रिवृत्[17] । तद्ब्रह्माऽभिव्याहृत्य शंसन्ति । एष उ एव स्तोमस्सो[18]ऽनुचरः ॥११॥

---

४ ह्वास्या, ह्वार्या । ५ प्राग्- । ६ धार्या । ७-धात्नी- । ८ तदुक्थम् अधिक है (द्राविड में) । । ९-य । १०-मह्या । ११ इदानि । १२-या । १३-म्रौ । १४-यो । १५-ध्रौ । १६-क्षौ । १७ पा । १८ मा ।

यदिममाहुरेकस्तोम इत्ययमेव योऽयम्पवते । एषोऽधिदेवतम् । प्राणोऽध्यात्मम् । तस्य शरीरमनुचरः[१९] ॥१२॥ तद्यथा ह वै मणौ मणिमूत्रं सम्प्रोतं स्याद्–॥१३।३।४॥

प्रथमेऽनुवाके चतुर्थं खण्ड ।

[१]–एवं हैतस्मिन्सर्वमिदं सम्प्रोतं गन्धर्वाप्सरसः पशवो मनुष्याः ॥१॥ तद्ध सुश्रवस्सामश्रवसः[२] मययौ[३] । तस्मै[४] ह श्वाजनिर्वैश्यः[५] मेयाय ॥२॥ तस्य हान्तरिक्षात्पतित्वा नवनीतपिण्ड उरसि निपपात । तं हाऽऽदायाऽनुदयौ ॥३॥ ततो[६] हैव स्तोमं[७] ददर्शाऽन्तरिक्षे विततम्बहुशोभमानम् । तस्यो ह युक्तिं[८] ददर्श ॥४॥ बहिष्पवमानमासद्य दीत्र[९] विपि प्राणय इति कुर्याद् दीत्र[९] गृहित्र[१०] अपान्य इति वाच । दिहलैवाऽस्तिभ्यं शुश्रूषैतेव कर्णाभ्याम् । स्वयमिदम्मनोयुक्तम् ॥५॥ तद्यत्र वा इषुरत्यग्रो भवति न वै स ततो हिनस्ति[११] तदु[१२] वा एतं नोपाप्नुयात् । प इत्येवाऽपान्यात् । तद्यथा बिम्बेन मृगधानयेदेवमेवैनमेतया देवतयाऽऽनयति । स युक्तः करोति[१३] । एष[१४] एनापि युक्तः ॥६।३।५॥

प्रथमेऽनुवाके पञ्चमः खण्ड । प्रथमोऽनुवाकस्समाप्त ॥

---

१९–रन्तम॥

१ एवम् (एवा) के पहले पञ्चम कं० का द्वि० वाक्य । २ मौञ्ज–। ३ साहश–। ४ तमस्मै । ५ प्रोयाय । ६ तेतो ७–म । ८–इ । ९ दीन्त्र, पहला अक्षर ळ भी हो ।१०गृहित्व।११अस्ति।इनस्ति।१२यद्।१३–न्तो।१४–ति॥

सोऽसौ साम्नः प्रत्तिं[1] वेद प्र हास्मै दीयते ॥१॥ ददा[2] इति ह या अयमग्निर्दीप्यते तथेति वायुः पवते हन्तेति चन्द्रमा ओमित्यादित्यः ॥२॥ एषा ह वै साम्नः प्रत्तिः[3] । एतां ह वै साम्नः प्रत्तिं[4] सुदक्षिणः क्षैमिर्विदां चकार ॥३॥ तां हैतां होतुर्वाऽऽन्ये गायेन्मैत्रावरुणस्य वा तां[5] ददा३[6] तथा३ हन्ता३[7] हिम्भा ओवा इति । प्र ह वा अस्मै दीयते ॥४॥ [सो] ऽप्यन्यान्[8] बहून्[9]पर्युपरि[10] य एवमेतां साम्नः प्रत्तिं वेद ॥५॥ य उ ह वा अबन्धुर्बन्धुमत्[11]साम वेद यत्र हाऽप्येनं न विदुर्यत्र रोपन्ति यत्र परीवचक्षते तद्धाऽपि श्रैष्ठ्यमाधिपत्यमन्नाद्यम्पुरोधाम्[12]पर्येति ॥६॥ अग्निर्ह वा अबन्धुर्बन्धुमत्[13]साम । कस्माद्वा ह्येनं दार्वोः कस्माद्वा पर्णस्य मन्थन्ति स श्रैष्ठ्यायाऽऽधिपत्यायाऽन्नाद्याय[14] पुरोधायै[15] जायते ॥७॥ स यत्र ह वा अप्येवंविदं न विदुर्यत्र रोपन्ति यत्र परीवचक्षते तद्धाऽपि श्रैष्ठ्यमाधिपत्यमन्नाद्यम्पुरोधाम्पर्येति ॥८॥३।६॥

द्वितीयेऽनुवाके प्रथमः खण्ड ।

स्वयमु तत्र यत्रैनं विदुः ॥१॥ सुदक्षिणो ह वै क्षैमिः प्राचीनशालिर्जाबाली[1] ते ह[2] सब्रह्मचारिण आसुः ॥२॥ ते हेमे बहु जप्यस्य

---

१ प्रति । २ तद्दान्, प्रदान् । ३ प्रत्तिः, प्रशृत्तिः । ५ नौ । ६ 'हन्ता३' अधिक है । ७ नास्ति । ८ अप्य् । ९–हून्य । १०–उप । ११–धु । १२–धा । १३ श्रेष्ठ्–। १४–द्याये । १५ परि ॥

१–शार्लिर् । २ ह ।

चाऽन्यस्य चाऽनूचिरे[3] प्राचीनशालिश्च[4] जाबालौ च ॥३॥ अथ ह स्म सुदक्षिणः[5] क्षैमिर्यदेव यज्ञस्याज्ञो यत्सुविदितं तद्ध स्मैव पृच्छति ॥४॥ त उ ह वा अपोदिता न्याक्रोशमानाश्चेरु[6][7]श्शूद्रो दुरनूचान[8] इति ह स्म सुदक्षिणं क्षैमिमाक्रोशन्ति[9] प्राचीनशालिश्च[10] जाबालौ च ॥५॥ स ह स्माऽऽह सुदक्षिणः क्षैमिर्यन भूयिष्ठाः कुरुपञ्चालास्समागता भवितारस्तत्र एष संवादो नाऽनुपद्रष्टे शूद्रा इव संवदिष्यामह[11] इति ॥६॥ ता उ ह वै जाबालौ दिदीक्षाते[12] शुक्रश्च गोश्रुश्च[13]। तयोर्ह प्राचीनशालिर्हैव[14] उद्गाता ॥७॥ स तद्ध सुदक्षिणो ऽनुबुबुधे जाबालौ हाऽदीक्षिपातामिति[16]। स ह संग्रहीतारमुवाचा-[15]ऽऽनयस्वाऽरे[17] जाबालौ हाऽदीक्षिपातां[18] तद्गमिष्याव इति ॥८॥३॥७॥

द्वितीयेऽनुवाके द्वितीय खण्डः ।

तस्य ह ज्ञातिका अश्रुमुखा इवाऽऽसुरन्यतरां वा अपसुपागादिति[1] ॥१॥ अथ ह स्म वै यः पुराब्रह्मवाद्यं वदत्यन्यतरामुपागादिति ह स्मैनम्मन्यन्ते । अथो ह स्मैनम्मृतमिवैवोपासते ॥२॥ तं ह संग्रहीतोवाचाऽथ यद्भगवस्ते ताभ्यां न कुशलं

२ है । ३ ऽरूच्–।४–शालाश् ।५–क्षी ।६ न्य्–।–श्चा । ७ चोरुन् ।
८–श्रा । ९ अक्रोश्–। १० क्षीश् । ११–मतिष्य–। १२ दृदी–। १३–रूश् ।
१४ प्र–। १५ संसं–। १६ दिदीच–। १७–यास्त्वा ॥
१–म ।

कयेत्थमात्येति[2] ॥३॥ ओमिति होवाच गन्तव्यम्श आचार्येस्तुय[3]-मानमन्वेति[4] ॥४॥ स ह रथमास्थाय मधावयांचकार । तं ह स्म प्रतीचन्ते ॥५॥ कं जानीतेति । सुदादिश इति । न वै नूनं स इदमभ्यवेयादिति । स एवेति ॥६॥ स ह सोपानादेवाऽन्तर्वेद्यव-स्थायोवाचाऽङ्गन्वित्थं गृहपता३ इति । तं ह नाऽनूदतिष्ठा-सव[5] । स होवाचाऽनूत्थाता[6] म[7] एजे । कृष्णाजिनोऽसी[ति] । तदिमे कुरुपञ्चाला अविदुरनूत्थातेव[8] त इति होचुः ॥७॥ तं ह कनीयान्भ्रातोवाचाऽनुतिष्ठ[9][10][11] । भगव उद्गातारमिति । तं हा ऽनूत्तस्थौ ॥८॥ स होवाच त्रिर्वै गृहपेव पुरुषो जायते । पितुरेवाऽग्रेऽधि जायतेऽथ मातुरथ यज्ञात् ॥९॥ त्रिर्वेव[12][13][14] म्रियत[15] इति । स यद्ध वा एनमेतत्पिता योन्यां रेतो भूतं सिञ्चति-॥१०॥३।८।

द्वितीयेऽनुवाके तृतीयं खण्डं ।

-तत्प्रथमम्म्रियते ॥१॥ अन्धमिव[1] वै तमो योनिः । लोहि-तस्तोको[2] वा वै स तदाभवत्यपां वा स्तोकः । किं हि स[3] तदा-भवति ॥२॥ स यस्तां देवतां वेद यां च स ततोऽनुसम्भवति या

---

२ तृ-। ३ आर्चेर्-। ४ स्तुय्-। ५-ष्ठस् । ६-ऊत्था-। ७ म । ८ 'इति' अधिक है । ९ भ्राता । १० वा । ११ अनुतिष्ठ । १२ त्रिर् । १३ अ, ऊ । १४ नास्ति । १५ त्रियत ॥

१ अन्ध्-। २ यो । ३ म् ।

चैनं[4] तम्मृत्युमतिवहति स उद्गाता मृत्युमतिवहतीति ॥३॥ अथ य एनमेतद्दीक्षयन्ति[5] तद्द्वितीयम्म्रियते। वपन्ति केशश्मश्रूणि। निकृन्तन्ति नखान्। मत्यञ्जन्त्यङ्गानि[6]। मत्यचत्यङ्गुलीः[7]। अपदतोऽपवेष्टित[8] आस्ते। न जुहोति। न यजते। न योषितं[9] चरति। अमानुषीं वाचं वदति। मृतस्य वावैष[10] तदा रूपम्भवति ॥४॥ स यस्तां देवतां वेद यां च[11] स ततोऽनुसम्भवति या चैनं तम्मृत्युमतिवहति स उद्गाता मृत्युमतिवहतीति ॥५॥ अथ य एनमेतदस्माल्लोकाल्लेतंचित्यामादधति तद् तृतीयम्म्रियते॥६॥ स यस्तां[12] देवतां वेद यां च स ततोऽनुसम्भवति या चैनं तम्मृत्युमतिवहति[13] स उद्गाता मृत्युमतिवहतीति ॥७॥ एतावद्धैवोक्त्वा[14] रथमास्थाय प्रधावयांचकार ॥८॥ तं ह जाबालम्मत्येतं कनीयान् भ्रातोवाच काम्भमाम्स्तद्दको[15][16] वाचमवादीति। हस्तिना गाथमैषीरिति॥९॥ प्र हैवैनं तच्छशंस यः कथमवोचद्भगव इति। यस्त्रयाणाम्मृत्यूनां साम्नाऽतिवाहं वेद स उद्गाता मृत्युमतिवहतीति ॥१०॥३।९॥

द्वितीयेऽनुवाके चतुर्थः खण्डः।

---

४ चे। ५ दि-। ६-अजत्य्। ७ यज्-। ८ अव-। ९ यीष्-। १० स। ११'का' अधिक है। १२ यन्तस्। १३-वीति। १४ वा। १५वहतीति' अधिक है। १६-सष्॥

तं धाय भगवस्ते पितो[१]द्गातारमयन्यतेति होवाच । तदु ह भाचीनशाला विदुर्य[२] एषामयं दन उद्गाताऽऽस[३] । तस्मिन् ह नाऽनुविदुः ॥१॥ ते होचुरनुधावत काण्ड्वि[४]यमिति । तं हाऽनुसस्नुः[५] । ते ह काण्ड्वियमुद्गातारं चक्रिरे ब्रह्माण[६]म्प्राचीनशालिम ॥२॥ तं हाऽभ्यवे[७]दयोवाचैवमेष ब्राह्मणो मोघाय षादाय नाऽग्लायत । स नाऽस्तु साम्नोऽन्विच्छती[८]ति । भाति हैवैनं तच्चक्रे ॥३॥ स यद्ध[९] वा एनमे[१०]तात्पिता योन्यां रेतो भूतं सिञ्चत्यादित्यो हैनं तद्योन्यां रेतो भूतं[११] सिञ्चति । स हाऽस्य तत्र मृत्योरीशे[१२] ॥४॥ अथो यदेवैनमेतात्पिता योन्यां रेतो भूतं सिञ्चति[१३] तद्ध वाव स ततोऽनुसम्भवानि प्राणं च । यदा ह्येव रेतस्सिक्तं प्राण आविशत्यथ तत्सम्भवति[१४] ॥५॥ अथो यदेवैनमेतद्दीक्षयन्त्यमिहैवैनं तद्योन्यां रेतो भूतं सिञ्चति । स हैवाऽस्य तत्र मृत्योरीशे[१५] ॥६॥ अथो यामेवैतां वैसर्जनीयामाहुतिमध्वर्युर्जुहोति शमिव स ततोऽनुसम्भवति छन्दांसि[१६] चैव ॥७॥ अथ य एनमे-

---

१-ए । २ विदुर् । ३ सः । ४ कान्त्याययम । ५-स्त्र. । ६ ब्राह्मणम । ७-पेदया । ८ न्वीच्-। ९ रद्यम । १० नारि२।११ रद्-। १२-षो । १३ 'अथोवाच' अधिक है । १४ 'अथो य एनमेतद्दीक्षयन्त्य........तत्रमृत्योरीशे' अधिक है । १५ 'अथो यदेवैनमेतद्दीक्षयन्ति' अधिक है । १६ छांसि ।

तदस्माल्लोकात्[१७]एनं चित्यामादधाति चन्द्रमा हैवैनं तद्योन्या रेतो भूतं सिञ्चति । स उ हैवाऽस्य तत्र मृत्योरीशे ॥८॥ अथो यद्धैन-मेतदस्माल्लोकात्[१७] [१८]एतं चित्यामादधत्यथो या एवैता अवोक्षणी-या आपस्ता एव स ततोऽनुसम्भवति[१८] प्राणमेव । प्राणो ह्यापः ॥९॥ तं ह वा एवंविदुद्गाता यजमानमोमित्येतेनाक्षरेणाऽऽदित्यम्मृत्यु-मतिवहति वागित्यग्निं द्यामिति वायुम्भा इति चन्द्रमसम् ॥१०॥ [१९]तान् वा एतान्मृत्यून् साम्नोद्गाताऽऽत्मानं च यजमानं चाऽति-वहत्योमित्येतेनाक्षरेण प्राणेनाऽमुनाऽऽदित्येन ॥११॥

तस्यैष श्लोकः—

> उतैषा ज्येष्ठ[२०] उत वा कनिष्ठ उतैषाम्पुत्र उत वा पितैषाम् ।
> एको ह देवो मनसि प्रविष्ट पूर्वो ह जज्ञे स उ गर्भेऽन्त —

इति ॥१२॥ तद्यदेषोऽभ्युक्त[२१] इममेव पुरुषं योऽयमाक्ष्णो[२२]ऽन्तरोमित्येतेनैवाक्षरेणप्राणेनैवाऽमुनैवाऽऽदित्येन[ ⋯ ]॥१३॥३।१०

द्वितीयेऽनुवाके पञ्चमः खण्डः । द्वितीयोऽनुवाकस्समाप्तः ॥

---

त्रिर्ह[१] वै पुरुषो म्रियते त्रिर्जायते[२] ॥१॥ स हैतदेव प्रथमम्म्रियते यद्रेतस्सिक्तं सम्भूतम्भवति[३] । स प्राणमेवाऽभिसम्भवति । आत्मान-

---

१७-स्मान् । १८-चन्त्येति । १९ ता । २० ज्येष्ठ । २१ त्तम्-। २१ प्रक्ष्णन् ॥

१ ह । २ 'स हैतदेव प्रथमम्म्रियते त्रिर्जायते' अधिक है । ३सभ-।

भिजायते ॥२॥ अथैतद्द्वितीयम्म्रियते यद्दीक्षते । स छन्दांस्येवा-ऽभिसम्भवति । दक्षिणामभिजायते ॥३॥ अथैतत् तृतीयम्म्रियते यन्[5]म्रियते । स श्रद्धामेवाऽभिसम्भवति । लोकमभिजायते ॥४॥ तदेतत् त्र्यावृद्[6]गायत्रं गायति[7] । तस्य प्रथमयाऽऽवृते[8]ममेव लोकं जयति यदु चाऽस्मिँल्लोके । तदेतेन चैनम्प्राणेन समर्[9]धयति यमभिसम्भवत्येतां चाऽस्मा आशाम्[10] प्रयच्छति यामभिजायते ॥५॥ अथ द्वितीययाऽऽवृते-दमेवाऽन्तरिक्षं जयति यदु चान्तरिक्षे । तदेतैश्[11]चैनं छन्दोभिस्स-मर्[1]धयति यान्यभिसम्भवति । एतां चास्मै दक्षिणाम्प्रयच्छति याम-भिजायते ॥६॥ अथ तृतीययाऽऽवृताऽमुमेव लोकम् जयति यदु चाऽमुष्मिँल्लोके । तदेतया चैनं श्रद्धया सम[1]र्धयति यमेनमेतच्छ्रद्ध-याऽ[12]भ्यारम्भयाद्धाति समयामितो भविष्यतीति । एतं चास्मै लो-[13]कम्प्रयच्छति यमभिजायते ॥७॥३॥११॥

तृतीयेऽनुवाके प्रथम खण्ड ।

एतद्वै तिसृभिरावृद्भिरिमाँश्च लोकाञ्जयत्येतैश्[1]चैनम्भूतैस्समर्धय-ति[2] यान्यभिसम्भवति ॥१॥ अथ वा अतो हिङ्कारस्यैव । तं ह[3] स्वर्गे लोके सन्[4]तम्मृत्युरन्[5]वेत्यावसथा ॥२॥ श्रीर्[6]वा एषा प्रजापतिस्साम्नो

---

४ यांव । ५-म । ६ त्रियू- । ७-प्रन्ति । ८ इम-(!) । ९-मृध्- ।
१० ' न्यभिसम्भवति ' अधिक है लाल रंग से कटा हुआ । ११ घ ।
१२ ऽभ्याद् । १३-भा ।

१ योध्- । २-मृध्- । ३ नास्ति । ४ सितम । ५ भनेति । ६ श्री ।

यद्धिङ्कारः । तमिदुदाना श्रिया प्रजापतिना हिङ्कारेण मृत्युमपसेध-
ति ॥३॥ हुम्भोइह मा ऽत्र नु मा यत्रेनघजमान इति हैतद् ॥४॥
स यथा श्रेयसा सिद्धः पापीयान् प्रतिविजत एवं हैवाऽस्मान्मृत्युः
पाप्मा प्रतिविजते ॥५॥ यन्मेयाह चन्द्रमा वै मा मासः । एष
ह वै मा मासः। तस्मान्मेयाह । भा इति हैतत्परोक्षेणेव । यस्माद्धेव
मेसाह यद्धेव मेसाहेतानि त्रीणि । तस्मान्मेति ब्रूयात् ॥६॥३॥१२॥

तृतीयेऽनुवाके द्वितीयः खण्डः।

हुम्भा इति ब्रह्मवर्चसकामस्य। भातीव हि ब्रह्मवर्चसम् ॥१॥
हुम्यो इति पशुकामस्य । यो इति ह पशवो वाश्यन्ते ॥२॥ हुम
पगिति श्रीकामस्य । पगिति ह श्रियम्पणायन्ति ॥३॥ हुम
मा भोवा इत्येतदेवोपगीतम् ॥४॥ महदिवाऽभिपरिवर्तयन् गाये-
दिति ह स्माऽऽह नाको महाग्रामो महानिवेशो भवतीति । स यथा
स्थाणुमर्पयिवेतरेण वेतरेण वा परियायात् तादृक्तत् ॥५॥ तदु
होवाच शाट्यायनिः कस्मै कामाय स्थाणुमर्पयेत् । अथोपगीतमे-
वैतत् । नैवैतदाद्रियेतेति ॥६॥ [इति] नु हिङ्कराणाम् । अथ वा

७ यद् । ८ 'इति' अधिक है । ९-विच- १० प पवम् ।
११ भाग । १२ येव ॥

१ भा । २ भ्रिंकृ-, -हु । ३-या, अयित्वा । ४ रेव । ५ पर्या-।
६ ऽतेंद्रू । ७ यद्द्-। ८ हिङ्कारा-।

मनो निधनमेव । ओमों इति द्वे अक्षरे । अन्तो वै साम्नो निधन-मन्तस्स्वर्गो लोकानामन्तो ब्रध्नस्य विष्टपम् ॥७॥ तमेवद्‌गाता यजमानमोमित्येतेनाक्षरेणान्ते स्वर्गे लोके दधाति ॥८॥ य उ ह वा अपक्षो वृक्षाग्रं गच्छत्यव वै स ततः पद्यते । अथ यद्वै पक्षी वृक्षाग्रे यदासियाराग्ययोः यत्क्षुरधारायामास्ते न वै स ततोऽवपद्यते । पक्षाभ्यां हि संयत्त आस्ते ॥९॥ तमेवद्‌गाता यजमा-नमोमित्येतेनाक्षरेण स्वरपक्षं कृत्वाऽन्ते स्वर्गे लोके दधाति । स यथा पक्ष्यविभ्यदासीतैवमेव स्वर्गे लोकेऽविभ्यदास्तेऽथोऽचरति ॥१०॥ ते ह वा एते अक्षरे देवलोकश्चैव मनुष्यलोकश्च । आदि-त्यश्च ह वा एते अक्षरे चन्द्रमाश्च ॥११॥ आदित्य एव देवलोक-श्चन्द्रमा मनुष्यलोकः । ओमित्यादित्यो वागिति चन्द्रमाः ॥१२॥ तमेवद्‌गाता यजमानमोमित्येतेनाक्षरेणाऽऽदित्यं देवलोकं गमय-ति ॥१३॥३॥१३॥

तृतीयेऽनुवाके तृतीय खण्ड ।

तं हाऽऽगतम्पृच्छन्ति कस्त्वमसीति । स यो ह नाम्ना वा गो-त्रेण वा प्रब्रूते तं हाऽऽह यस्तेऽयमात्माऽभूदेष ते स इति ॥१॥

---

९ हिंसयत । १०-श्चो । ११-श्व ।
१-प्प् ।

तस्मिन् हाऽऽत्मन् प्रतिपद्। तमृत[2]स्सम्पदार्यपद्गृहीतमपकर्षन्ति। तस्य हाऽहोरात्रे लोकमाप्नुतः ॥२॥ तस्मा उ हैतेन[3] प्रब्रुवीत[4] कोऽहमस्मि सुवस्त्वम्। स त्वा स्वर्ग्यं[5] स्वरगामिति ॥३॥ को ह वै प्रजापतिरथ हैवंविदेव सुवर्गः[6]। स हि सुवर्गच्छति ॥४॥ त हाऽऽह यस्त्वमसि सोऽहमस्मि योऽहमस्मि स त्वमस्येहीति ॥५॥ स एतमेव सुकृतरसम्प्रविशति। यदु ह वा अस्मिँल्लोके मनुष्या यजन्ते[7] यत्साधु[8] कुर्वन्ति तदेषामूर्ध्वमन्नाद्यमुत्सीदति। तदमुं चन्द्रमसम्मनुष्यलोकम्प्रविशति ॥६॥ तस्येदम्मानुषनिकाशन[9]-मण्ड[10]मुदरे[11]ऽन्तस्सम्भवति। तस्योर्ध्व[12]मन्नाद्यमुत्सीदति स्तनावभि[13]। स यदाजायतेऽथाऽस्मै माता स्तनमन्नाद्यम्प्रयच्छति ॥७॥ अजातो ह वै तावत्पुरुषो यावन्न यजते[14] स यज्ञेनैव जायते। स यथाऽण्डम्प्रथममनिर्भिण्णमेवमेव ॥८॥ तदा ते ह वा एवंविदुद्गाता यजमानमोमित्येतेनाऽक्षरेणाऽऽदित्यं देवलोकं गमयति। वागिरयस्मा उत्तरेणाऽक्षरेण चन्द्र[15]मसमन्नाद्यमक्षिति[16]म्प्रयच्छति ॥९॥ अथ यस्यैतदविद्वानुद्गायति[17] न हैवैनं देवलोकं गमयति नो

२ त। ३ सैन। ४-ब्रह्-,-वीत्। ५-गाम। ६ सुस्वर्-, -म्। ७ जायन्ते। ८ सं-। ९-रै। १०-मँ-निष्-इसके पश्चात् 'इदम्'। ११ अदंरे। १२ ध्व्-। १३-नाव्। १४ जायते। १५-स। १६-यक्षिति। १७ ना।

एनमन्नाद्येन समर्धयति[18] ॥१०॥ स यथाऽण्डं विदिग्धं[19] शयीता-ऽन्नाद्यमलभमानमेवमेव विदिग्धश्शेतेऽन्नाद्यमलभमानः[20] ॥११॥ तस्माद् हैवंविदमेवोद्गापयेत । एवंविदिहैवोद्गातारिति हूतः प्रतिशृणुयात्[21] ॥१२॥३।१४॥

तृतीयेऽनुवाके चतुर्थः खण्डः । तृतीयोऽनुवाकस्समाप्तः ।

:०:

वागिति[1] हेन्द्रो विश्वामित्रायोक्थमुवाच[2] । तदेतद्विश्वामित्रा उपासते वाचमेव ॥१॥ मनुर्ह वासिष्ठाय ब्रह्मत्वमुवाच । तस्मादाहुर्वासिष्ठमेव ब्रह्मेति ॥२॥ तदु वा आहुरेवंविदेव ब्रह्मा । क उ एवंविदं वासिष्ठमर्हतीति ॥३॥ प्रजापतिः प्रजिजनिषत । स तपोऽतप्यत । स ऐक्षत हन्त नु प्रतिष्ठां जनयै[3] ततो याः प्रजास्स्रक्ष्ये[4] ता[5] एतदेव प्रतिष्ठास्यन्ति नाप्रतिष्ठाश्चरन्तीः प्रदापिष्यन्त इति ॥४॥ स इमं लोकमजनयदन्तरिक्षलोकममुं[6] लोकमिति । तानिमाँस्त्री-ल्लोकाञ्जनयित्वाऽभ्यश्राम्यत् ॥५॥ तान् समतपत्[7] । तेभ्यस्तप्ते-भ्यस्त्रीणि शुक्राण्युदायन्नग्निः पृथिव्या वायुरन्तरिक्षादादित्यो दिवः ॥६॥ स[8] एतानि शुक्राणि पुनरभ्येवाऽतपत्[9] । तेभ्यस्संतप्तेभ्य

१८–सृध्–। १९–षा। २०–षा.। २१–शृणु–॥

१ हे। २ उत्थ–। ३ जाये, जनये। ४ स्रक्ष्–। ५ ताम्। ६–मु। ७ समभपन्। ८ सम। ९–न्।

स्त्रीण्येव शुक्राण्युदायन्नृग्वेद एवाऽग्नेर्यजुर्वेदो वायोस्सामवेद आदित्यात् ॥७॥ स एतानि शुक्राणि पुनरभ्यतपत् । तेभ्य-स्तप्तेभ्यस्त्रीण्येव शुक्राण्युदायन्भूरित्यृग्वेदाद्भुव इति यजुर्वेदात्स्वरिति सामवेदात्तदेव[10] ॥८॥ तद्ध वै त्रय्यै विद्यायै शुक्रम् । एतावदिदं सर्वम् । स यो वै त्रयीं विद्यां विदुषो लोकस्सोऽस्य लोको भवति य एवं वेद ॥९॥३॥१५॥

चतुर्थेऽनुवाके प्रथमः खण्डः ।

अयं वाव यज्ञो योऽयम्पवते । तस्य वाक् च मनश्च वर्तन्यौ । वाचा च ह्येष एतन्मनसा च वर्तते ॥१॥ तस्य होताऽध्वर्युरुद्गाते-त्यन्यतरां वाचा वर्तनिं संस्कुर्वन्ति । तस्मात्ते वाचा कुर्वन्ति । ब्रह्मैव मनसाऽन्यतराम्[1] । तस्मात्स तूष्णीमास्ते ॥२॥ स यद्ध सो-ऽपि स्तूयमाने वा शस्यमाने वा वावदयमान आसीताऽन्यतरामेवा-ऽस्यापि तर्हि स वाचा वर्तनिं संस्कुर्यात् ॥३॥ स यथा पुरुष एकपाद्यन्[2] भ्रेषन्नेति रथो वैकचक्रो वर्तमान[3] एवमेव तर्हि यज्ञो भ्रेषन्नेति ॥४॥ एतद्ध तद्विद्वान्[4] ब्राह्मण उवाच ब्रह्माणम्मातरनु-

---

१०-म ॥

१-माद् । २ य्-न् ३-नां । ४ त ।

वाच उपाकृते[5] वा वच्यमानमासी[6]नमर्ये[7] वा इमे तर्हि यज्ञस्याऽन्तर-[8]गुरिति । अर्ध हि ते तर्हि यज्ञस्याऽन्तरीयुः[9] ॥५॥ तस्माद्ब्रह्मा प्रातरनुवाक उपाकृते वाचंयम आसीताऽऽपरिधानीयाया आ वषट्कारादितरेषां स्तुतशस्त्राणामे[10]वाऽऽसंस्थायै पवमानानाम् ॥६॥ स यथा पुरुष उभया[11] पाद्यन्[12] श्रेषं[13] न न्येति रथो वोभयाचक्रो-वर्तमान एवमेतर्हि यज्ञो श्रेषं न न्येति ॥७॥३।१.६॥

चतुर्थेऽनुवाके द्वितीयः खण्डः ।

स यदि यज्ञ ऋक्तो[1] श्रेषमियाद्ब्रह्मणे प्रब्रूतेत्याहुः । अथ यदि यजुष्टो[2] ब्रह्मणे प्रब्रूतेत्याहुः । अथ यदि सामतो ब्रह्मणे प्रब्रूतेत्याहुः । [3]अथ यदनुपस्मृतात् कुत इदमजनीति ब्रह्मणे प्रब्रूतेत्ये[3]वाऽऽहुः ॥१॥ स ब्रह्मा प्राङ्[4] उदेत्य स्रुवेणाऽऽग्नीध्र आज्यं जुहुयाद्भूर्भुवस्स्वरित्ये-ताभिर्व्याहृतिभिः ॥२॥ एता वै व्याहृतयस्सर्वप्रायश्चित्तयः । तद्यथा लवणेन सुवर्णं संदध्यात्[5] सुवर्णेन रजतं रजतेन त्रपु[6] त्रपुणा लोहायसं लोहायसेन कार्ष्णायसं[7] कार्ष्णायसेन दारु दारु च चर्म

---

५–ष्टो । ६ 'यास्त्-' द्विवार पढ़ा गया है । ७–न्द् । ८–गु-रुर् । ९ ऽन्तर्युः । १०–र्ब । ११–पाद् ।१२ यद् । १३ नँ ॥

१ ई–। २–ष्टो । ३ स्थ [illegible] प्रन्. प्रा । ५ विद्ध्–। ६–पु ७ कर्–।

च श्लेष्मणे [8]वमेवैनं विद्वाँस्तत्सर्वं भिषज्यति ॥३॥ तदाहुर्यदहौपीन्मे अहान्मेऽग्रहीदित्यर्ध्वयवे दक्षिणानयन्त्य[21]सीन्मे [9]वषट् [10,11]अकर्म इति होत्र उद्गासीन्म इत्युद्गात्रेऽथ किं चक्रुपे ब्रह्मणे तूष्णीमासीनाय समावर्तीरे[12]वैतैर्ऋत्विग्भिर्दक्षिणा नयन्तीति ॥४॥ स ब्रूयादर्ध-[13]भाग्य [14]वै [15]स [16]यज्ञस्याऽर्धं ह्येष यज्ञस्य वहतीति । अर्धो ह स्म वै पुरा ब्रह्मणे दक्षिणा नयन्तीति । अर्धा इतरेभ्य ऋत्विग्भ्यः ॥५॥ तस्यैष श्लोको—

मयीदम्मन्ये भुवनादि सर्वम्, मयि लोका मयि दिशश्चतस्रः ।
[17]मयीदम्मन्ये निमिषयदेजति, मय्याप ओषधयश्च सर्वा, इति ॥६॥

मयीदम्मन्ये भुवनादि सर्वमित्येवंविदं ह वावेदं सर्वम्भुवनमन्वायत्तम् ॥७॥ मयि लोका मयि दिशश्चतस्र इत्येवंविदि ह वावलोका एवंविदि दिशश्चतस्रः ॥८॥ मयीदम्मन्ये निमिषयदेजति मय्याप ओषधयश्च सर्वा इत्येवंवि[18]दि ह वावेदं सर्वम्भुवनम्प्रतिष्ठितम् ॥९॥ तस्माद् हैवंविदमेव ब्रह्माणं कुर्वीत । स ह [19]वाव ब्रह्मा य एवं वेद ॥१०॥३॥१७॥

चतुर्थेऽनुवाके तृतीयः खण्ड ।

---

८ श्लेष्म (सदृष्यात) या कोष्ठ लाल रंग में कटा हुआ। ९-वषट् । १०अर्दरण् । ११ मय् । २० 'एव' नास्ति । २१ आद्यासीन् । १२-रेर् । १३-भाग्य । १४नास्ति । १५ यै । १६ प । १७मतिहो । १८-दें । १९ एव ।

अथ या अतस्स्तोमभागानामेवाऽनुमन्त्राः ॥१॥ तद्धैतदेके स्तोमभा[1]गैरेवाऽनुमन्त्रयन्ते । तत्तथा न[2] कुर्यात्[3] ॥२॥ देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो वाचमिष्येत्यु हैकेऽनुमन्त्रयन्ते सविता वै देवानाम्प्रसविता सवित्रा[4] प्रसूता इदमनु मन्त्रयामह इति वदन्तः। तदु तथा न[5] कुर्यात् ॥३॥ भूर्भुवस्स्वरित्यु हैकेऽनुमन्त्रयन्त एषा वै[6] त्रयीविद्या त्रय्यै[7] वद[8] विद्ययाऽनुमन्त्रयामह[9] इति वदन्तः । तदु - तथा नो एव कुर्यात् ॥४॥ ओमित्येवानुमन्त्रयेत ॥५॥ अथैष वसिष्ठस्यैकस्तोमभागानुमन्त्रः । तेन हैतेन वसिष्ठः प्रजातिकामो-ऽनुमन्त्रयां चक्रे देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो[10] वाचमिष्य भूर्भुवस्स्वरोमिति । ततो वै स बहुः[10] प्रजया पशुभिः प्राजायत[12] ॥६॥ स एव तेन वसिष्ठस्यैकस्तोम भागानुमन्त्रे[13]णाऽनुमन्त्रयेत[14] बहुरेव प्रजया[11] पशुभिः प्रजायते । इयं[15] त्वेवस्थितिरोमित्येवाऽनुमन्त्रयेत ॥७॥३।१८॥

चतुर्थेऽनुवाके चतुर्थ[16] खण्डः ।

---

१ स्तोमा- । २ नु । ३ कुर्याद् । ४ ऱ । ५ मे 'ए' खाल में कटा, ग । ६-र्इं । ७ त्रैय्ये । ८ ऽग । ९-याया । १०-हु । ११-जाया । १२ प्राज्- । १३ तस्ताम्- । १४-येते । १५ इय । १६ पञ्चम । १७-न्त्रा ॥

अथैष वाचा वज्रमुदृह्णाति[1]। यदाह सोमः पवत इति वोपावर्त-ध्वमिति वा वाचैव तद्वाचो वज्रं विगृह्णते वाचस्सत्येनातिमुच्यते। तस्मादोमित्येवाऽनुमन्त्रयेत ॥१॥ देवा वा अनया[2] त्रय्या [ विद्यया ] सरसयोर्ध्वास्स्वर्गं लोकमुदक्रामन्। ते मनुष्या-णामन्वागमाद्बिभ्यतस्त्रयं[3] वेदमपीलयन् ॥२॥ तस्य पीलयन्त एकमेवाक्षरं नाऽशक्नुवन्पीलयितुमोमिति यदेतत् ॥३॥ एष उ ह वाव सरसः। सरसा ह वा एवंविदस्त्रयी विद्या भवति ॥४॥ स यां ह वै त्रय्या[4] विद्यया सरसया जितिं जयति यामृद्धिमृध्नोति जयति तां जितिमृध्नोति तामृद्धिं य एवं वेद ॥५॥ एतद्ध वा अक्षरं त्रय्यै विद्यायै प्रतिष्ठा[5]। ओमिति वै होता प्रतिष्ठित ओमित्य-ध्वर्युरोमित्युद्गाता ॥६॥ एतद्ध वा अक्षरं वेदानां त्रिविष्टपम्। एतस्मिन्वा अक्षर[6] ऋत्विजो यजमानमाधाय स्वर्गे लोके समुद्गहन्ति तस्मादोमित्येवानुमन्त्रयेत् ॥७।३।१९॥

चतुर्थेऽनुवाके पञ्चमः खण्डः। चतुर्थोऽनुवाकस्समाप्तः।

---

गुहासि देवो[1]ऽस्युपवा[2]स्युप तं वायस्व[3] योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥१॥ माहिनासि बहुलासि बृहत्यासि रोहिण्यस्यपश्या[4]सि ॥२॥

---

१ य। २-ध्र्यं। ३ विभ्य-। ४ त्रेय्-। ५ प्रतिष्ठं। ६-र।

१ देवास्मि। २ व्द्। ३ वयस्व। ४ भहिका।

सम्भूर्देवोऽसि समहम्भूयासम्[५] । आभूतिरस्याभूयासम् । भूतिरसि भूयासम् ॥३॥ यास्ते प्रजा उपदिष्टा नाहं तत्र ताः पर्येमि । उप ते ता दिशामि ॥४॥ नाम मे शरीरम्मे प्रतिष्ठा मे । तन्मे त्वयि तन्मे मोऽपहृथा इतीमाम्पृथिवीमवोचत् ॥५॥ तमियमागतम्पृथिवी प्रतिनन्दत्ययं ते भगवो लोकः । स ह[६] नावय लोक इति ॥६॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥७॥ किं नु ते मयीति[७] । नाम[८] मे शरीरम्मे प्रतिष्ठा मे । तन्मे त्वयि तन्मे पुनर्देहीति । तदस्मा[१४] इयम्पृथिवी पुनर्ददाति ॥८॥ तामाह प्र मा वहेति । किमभीति । अग्निमिति तमग्निमभिप्रवहति[९] ॥९॥ सोऽग्निमाहाऽभिजिदस्य[१०]भिजय्यासम्[११] । लोकजिदसि लोकं जय्यासम् । अत्तिरस्यन्नमद्यासम् । अन्नादो भवति यस्त्वैवं वेद ॥१०॥ सम्भूर्देवोऽसि समहम्भूयासम् । आभूतिरस्याभूयासम् । भूतिरसि भूयासम् ॥११॥ यास्ते प्रजा उपदिष्टा नाहं तत्र ताः पर्येमि । उप ते ता दिशामि ॥१२॥ तपो मे तेजो मेऽन्नम्मे वाक् मे । तन्मे त्वयि । तन्मे मोऽपहृथा[१२] इत्यग्निमवोचत् ॥१३॥ त[१३] तथैवाऽऽगत-

---

५ आभूतिरिति । ६ स । ७ मयी । ८ म । ९-हन्ति । १० 'अभिजिदस्य' दो बार आया है । ११ जय्यं- । १२-हाय् । १३ तस्मा । १४ अस्मैाय् ॥

